स्त० अन्तः— वन्दनप्रकरण एह सिद्धान्त विधिप्रवाद नाम पूर्वथकी संक्षेपे करी उद्धर्यो रच्यो मुनि भद्रबाहुई ५५। वन्दनपकर्ण(प्रकरण) भद्रबाहुनो करेलो थिरपुरनयरे वीरप्रभुप्रसादात् लिपिकृतं मोहनविजय ॥

[ 584 ] अन्तः— संवत् १६८३ वर्षे पोससुदि १४ जेसलमेरमध्ये पार्थः करमचन्द कचरांणी लिषत ॥

[ 585 ] अन्तः— संवत् १४९२ वर्षे पोषमासे कृष्णपक्षे १० दशम्यां तिथौ भृगुवासरेऽद्येह श्रीमदणहिल्लपत्तने पातसाहश्रीअहम्मदविजयराज्ये महामहनीयतमखरतरगच्छाधीश्वरभट्टारकश्रीजिनभद्रसूरीणां वाचनाय परोपकृतये च पुस्तकोऽयं पद्मानेनालेखि ॥ २८००० ॥

[ 586 ] आदिः— श्रीज्ञातनन्दनं नत्वा स्तुत्वा च श्रुतदेवताम् ।
किञ्चिन्निशीथसूत्रस्य व्याख्यामाख्यामि हर्षवान् ॥१॥
अथ निशीथमिति कः शब्दार्थः । उच्यते—

[ 609 ] अन्तः— संवत् १५६४ वर्षे जे(ज्ये)ष्ठ सुदि १३ सोमे अद्येह पत्तने खरतरगच्छे श्रीजिनचन्द्रसूरीणां धर्म्मराज्ये श्रीबृहत्कल्पचूर्णिः ॥ लेखक मुहता ज्ञाति माईदास लिपिकृतं श्रीनागोरमध्ये शुभं भवतु ॥

[ 611 ] अन्तः— ग्रन्थाग्रम् ११०००॥ संवत् १५६३ वर्षे वैशाषशुदि ७ सोमे श्रीअणहिल्लपुरश्रीपत्तने लष्य(लिखि)तम् ।

[ 612 ] अन्तः— सो संसारसंतत्तिं छिंदित्ता मोक्खं पाविति ॥
विशेषकल्पचूर्णिः समाप्ता । ग्रन्थाग्रम् ११०००॥
संवत् १४ आषा[ढा]दि ९६ वर्षे पौषमासे वलक्षपक्षे १५ पूर्णमास्यां रवावद्येह श्रीमदणहिल्लपत्तने खरतरगच्छालङ्कारभूतैः स्वाचारपालनचतुरैर्गच्छेश–श्रीजिनभद्रसूरिभिर्विशेषकल्पचूर्णेः पुस्तकोऽयं लेखयांचक्रे ॥

[ 615 ] अन्तः— संवत् १६६९ वर्षे० आसू सुदि ९ तिथौ आदित्यवारे ॥ बहुमङ्गलसूरबुधगुरुजनवर्गे श्रीमज्जेसलमेरुमहादुर्गस्वर्गे प्रवरतरन्यायोदयविधिधरणीपालनानुकृतश्रीरामे प्रस्फुरत्प्रचुरतरजगत्त्रयीकृताश्रयनिष्पापप्रतापसुरूपसहस्रधामाभिरामे निजरूपशोभावैभवतिरस्कृतकामे सुपुरितानेकविवेकशोकयाचकलोकमनःकामे । श्रीमज्जि–नाद्यादव कुलामलकमलिनीदलमरालबालश्रीभीमे निस्सीमभूमिरामेशे विजयीनि ।

इतश्च–श्रीखरतरविधिपक्षे श्रीमज्जिनभद्रसूरिपरम्पराशुक्तिकासंपुटमौक्तिकानुकारिश्रीजिनमाणिक्यसूरिपट्टोदयधारकेषु स्ववचनरचनारञ्जिताकबरसाहिप्रदत्तयुगप्रधानपदस्फारकेषु जलधिसकलजलचरजन्तुरक्षाकारकेषु कलिकालकलङ्कावलोकनकलुषी–भूतमनस्समस्ता (?) चतुस्सागरांबरधरणीनिवेशितात्मप्रतापकोट्टपालसाहिसलेमबलिराजेन संतापितं श्रीवीरशासनं निराधारं प्रणष्टसकलसूरिपालनमालोक्य विशिष्टवचनामृतैस्तमाश्वास्याखण्डजैनशासनरक्षकविधायकेषु सवाईयुगप्रधानश्रीजिनचन्द्रसूरितत्पट्टोदयशैलसहस्रधामानुकारिषु श्रीसाहिकृतसूरिपदमहोत्सवविधिषु च[तु]र्दश विद्यावधूवरभोगविधीनभर्तृषु भट्टारकश्रीजिनसिंहसूरिविजयस्तु० ।

श्रीमज्जेसलमेरुवास्तव्यकृतानेकधर्मकर्त्तव्यभणसालीगोत्रपवित्रताकारकसा०-पूनसी-तत्पुत्रसा० श्रीमल-तद्भार्याचांपलदे-तत्पुत्ररत्नेन धर्म्मस्थानविषयप्रदत्तबहु-द्रविणकृतसकलनगरलोकभोजनपूर्वकनालिकेरयुतरजतवितरण-जीवजन्तुरक्षागुणस्मारित-कुमारपालगुणसा० थिरराजेन सा० हरिराजपुत्रयुतेन स्वकृतनूतनश्रीज्ञानकोशे व्यवहारचूर्णिः श्रीजिनकुशलसूरिसाषे वा० स्वर्णप्रभ-पं० कमलोदयगणि०-पं० देव-सार-पं० गुणराज०-पं० थिरा लिपीकृतम् । शिष्यकरमचन्द उदयसंघसहितसपरि-वार । शुभं भवतु । कल्याणमस्तु ॥

॥ संवत् १६७१ वर्षे श्रीमद्युगप्रधानजिनसिंहसूरिराज्ये विजयमाने राउलश्रीकल्याणदासभूभृति भुवं शासति सति श्रीजेसलमेरुदुर्गे श्रीक्षेमशाखायां श्रीमच्छ्रीवाचनाचार्यश्रीप्रमोदमाणिक्यगणि-शिष्यश्रीजयसोममहोपाध्यायशिष्यैः श्री-गुणविनयोपाध्यायैः पण्डितमतिकीर्त्तिकृतसाहायकैरशोधि व्यवहारचूर्णिः भणसाली-गोत्ररत्नसाहथिरराजेन साहहरिराज-सा० मेघराजसुतरत्नाभ्यां सहितेन स्वलेखित-पुस्तकभांडागारे सुखश्रीयशस्संपदः पदे पदे विलसन्तु श्रीमद्देवगुरुप्रसादात् लेख-यितृ-शोधयितॄणाम् ॥ श्रीरस्तु ॥

स्वस्ति श्रीशुभकार्यसिद्धिकरणश्रीपार्श्वनाथार्हति
चैत्ये सद्विधिना विवेकिनिकरैः संपूज्यमाने सदा ।
राज्ये राउलभीमनामनृपतेः कल्याणदासस्य च
वर्षे विक्रमतस्तु षोडशशते एकोनसप्ततौ (१६६९) ॥१॥

वृद्धे खरतरगच्छे श्रीमज्जिनभद्रसूरिसंताने ।
जिनमाणिक्ययतीश्वरपट्टालंकारदिनकारे ॥२॥

आमद्भाग्यजये प्रबुद्धयवनाधीशप्रदत्ताभये
साक्षात्पञ्चनदीशशासनविधौ संप्राप्तलोकस्मये ।
यावज्जैनसुतीर्थदण्डकरयोः संमोचनाख्यालये
गोरक्षा-जलजीवरक्षण-धनप्राप्तप्रतिष्ठाचये ॥३॥

साधुव्यंसकदोषदुष्टितमनःश्रीनूरदीरञ्जनाद्
देशाकर्षणसाधुदुःखदलनात् कारुण्यपुण्याशये ।
श्रीश्रीमज्जिनचन्द्रसूरिसुगुरौ यौगप्रधाने चिरं
राज्यं कुर्वति जैनसिंहसुगुरौ सद्यौवराज्ये किल ॥४॥

कोट्टे जेसलमेरौ उपकेशज्ञातिमण्डन जातः ।
भणसालिकगोत्रीयः आसासाहः सदोत्साहः ॥५॥
तत्पुत्रो वस्ताख्य- तत्तनयः पुंजराज इति नामा ।
तत्पुत्रो जसधवलः तत्सूनुः पुनसीसाहः ॥६॥

तत्कुलदीपप्रतिमः श्रीमल्लः तस्य पुत्रवररत्नम् ।
चांपलदेव्याः कुक्षिस्वर्णाचलकल्पवृक्षोऽस्ति ॥७॥
भुवि जन्तुजातरक्षास्मारितसुकुमारपालभूपालः ।
जिनवर-गुरुपरमाज्ञातिलकितभालो विशालगुणः ॥८॥

धर्मस्थानव्ययितद्रविणः प्रगुणः प्रधानशीलेन ।
जीर्णोद्धारधुरीणः दीनानाथादिदुःखहरः ॥९॥
स्वालये देवगृहे शम्भवाधिपस्थापनामहे सम्यक् ।
प्रत्येकं श्राद्धानां प्रददे यो राजतीं मुद्राम् ॥१०॥
मिष्टान्नभोजनेनानाथान् संतोष्य वर्षनिष्ठासु ।
अष्टाहिकासु घुसृणैः वर्णाद्यैः पूजयांचक्रे ॥११॥
सार्द्धसहस्रचतुष्टयप्रमिताः प्रतिमाश्च सप्त चैत्ये ।
द्रव्यस्तवाधिकारी भावस्तवसंगतः सततम् ॥१२॥
नगरजनराजमान्यो विधिपक्षाराधको विधिज्ञश्च ।
दुष्कालकण्ठहस्तो मृदुवचनो गर्वमदरहितः ॥१३॥
श्रीथाहरुसुनामा अमृजहरिराज-मेघराजाभ्याम् ।
युक्तः कनकांभर्त्ता आद्यः सुश्रावको द्रव्यैः ।१४।
ज्ञानप्राप्तिनिमित्तं भवे भवे बोधिबीजशुद्ध्यर्थम् ।
सज्ज्ञानकोशमेनं शुद्धं संलेखयांचक्रे ॥१५॥ —अष्टभिः कुलकम् ॥
चित्कोशलेखनेन पुण्यं यदवापि थाहरुकेण ।
हर्षात् तेन प्राज्ञाः जिनागमं वाचयन्तु सदा ॥१६॥
ग्रं०१०००० पांचसै ॥

[ 622 ] **अन्तः**— संवत् शशि-सिद्ध-सागर-कुमुदबांधवमिते(१८८१)अश्वयुजकृष्णपक्षे एकादशी कर्मवाटयाम्(?)॥ श्रीतपागच्छे कुमतान्धकारनभोमणिसकलभट्टारकश्री १०८ श्रीविजयप्रभसूरीश्वर-तत्पट्टे सकलशास्त्रनिपुणसंशयतिमिरभास्करभट्टारक श्री १०८ श्रीविजयरत्नसूरीश्वर-तत्पट्टे सकलक्रियाउद्धारकभट्टारकश्री १०९ श्रीविजयक्षमासूरीश्वरजिद्विजयराज्ये सकलविद्वज्जनशिरोमणिपण्डितश्री५श्रीउदयसागरगणि-तच्छिष्य-सकलजिनागमप्रविणपाठितानेकछात्र-वाचारञ्जितानेकविशारद-सर्वत्रलब्धयशोवादपंडित-श्री५श्रीवीरमसागरगणि-तच्छिष्यभुजिष्यपं०दोलतिसागरगणिना लिखितमिदं सूत्रम् श्रीमद्विक्रमद्विक्रमपुरवरे सिवपुरीवास्तव्यश्राद्धउपाश्रये स्वसुशिष्यणीसदक्षसुश्राविका पुण्यप्रभाविका श्रीपम्यक्त्वमूलद्वादशव्रतधारिका साधुसेवाकारिका सुश्राविका केशीनिमित्तमिति श्रेयोस्तु आचन्द्रार्कं लेखकपाठकवाचकानामिति । शुभं भवतु ॥

[ 625 ] **अन्तः**— संवत् १५२४ वर्षे जेष्ठ व०१ रवौ ज्यो०अलवालिखितम् ।
(हरतालप्रयोगेन प्रभ्रष्टाक्षरा अधोलिखितपुष्पिकायाम्— )

॥ संवत् १८४० मिते पोषमासे शुक्लपक्षे ११ तिथौ । श्रीश्रीबीकानेरमध्ये चोपडागोत्री... ... ... ... पसीकेन । श्री-कल्पसूत्रपुस्तक···ज्ञानभांडागारे मुक्तं स्वश्रेयसे ॥ प्रति ९ ।

[ 626 ] **अन्तः**— संवत् १६४८ (वर्षे) वीशाष (मासे) शुक्लपक्षे १३ तिथौ गुरुवासरे ॥छ॥ श्रीउपाध्यायरतन··· ··· । भूकामधे लषापत्त ॥

[627] **अन्तः**— संवत् १७१६ वर्षे मधुमासे असितपक्षे भूतेष्टाकर्म्मवादयां गुरुवासरे । श्रीअंचलगच्छे मुनिश्रीमाणिक्यसागर–तत्शिष्यमुनिश्रीन्यानसागर–तच्छिष्यमुनि–नयसागरेण लिखितम् । शेषपुरे स्वपठनार्थमिति ॥ शुभं भवतु ।

[628] **अन्तः**— इति श्रीपज्जोसवणाकप्पो दसासुयस्कंधस्स अठ्ठम[म]ज्झयणं दसासम्मत्तं ॥ ग्रन्थाग्रं १२१६ ॥ श्रीरस्तु कल्याणमस्तु ॥

संवत् १६१२ वर्षे वैशाखशुदि १३ अणहिल्लपत्तने लिखितं मुनि–राजतिलकेन ॥श्री॥

श्रीराजगच्छे भ० श्रीपद्माणंदसूरि–तत्पट्टे श्रीनंदिवर्धनसूरि–तत्शिष्यउ० श्रीपुण्यराज–तत्शिष्यउदयराजस्ववाचनाय लिषापितम् ।।

[630] **अन्तः**— (अन्यलेखकेन लिखितमिदम्– )

संवत् १७१३ वर्षे शाके १५६८ प्रवर्त्तमाने पोषशुदि २ द्वितीया-पारिखगोत्रे श्रीजेसलमेरुवास्तव्यश्रीसूर्यमल्लभार्यासुजाणदेनाम्न्या पंचमीतपोद्या-पने न्या(ज्ञा)नभक्तिनिमित्त श्रीकल्पसूत्रपुस्तकं पं० श्रीजिनसागरश्रीप्रदत्तं श्रीस्वपु-ण्याय पं० श्रीजिनसागरगणि–पन्यासश्रीराजसागरगणिनां विहरापितम् ।। शुभम् ।

( एतदपि लेखकान्तरेण लिखितम् – )

आ परत श्री पं०परथीराजजी महाराजनी छै ।। पान ९७ छै ।

[637] **अन्तः**— संवत् १६१६ वर्षे श्रावणवदिकृष्णनवम्यां तिथौ संपूर्ण जाता ॥छ॥ पण्डितश्रीश्रुतसमुद्राह्वाय पार्श्वात् प्राप्तश्रुतसमुद्रार्थतः सुबोधज्ञातसुविचार–पूज्यपण्डितश्रीविचारसागरगणि –तच्छिष्यभुजिष्यविनीतविनयस्वसमयपरसमयसमस्त-शास्त्रावबोधार्थसागरमहोपाध्यायश्रीधर्मसागरगणिविलोकनार्थम् । लेखक-वाचक-योश्च भद्रं भवतु ॥

[640] **चू०अन्तः**— म०अचलकेन लिखितम् ॥ छ ॥ श्री ॥

शोधिता चेयं महोपाध्यायश्री ५ श्रीमुनिविमलगणिचरणारविन्दचञ्चरी-केण पं०भावविजयगणिना यथादर्श श्रेयोर्थम् ॥ श्रीरस्तु ॥

[644] **अन्तः**— संवत् १९५४ वर्षे फाल्गुनकृष्णे श्री१४चतुर्दश्यां वासरे मृगांके साध्वी-सांकलीश्रीव्वा(?) शांतिश्रीअर्थे ज्ञानउद्यापने सा० भाहालचन्द्र-वधूबाईभल्लीकेन सुभपुण्योपार्जनाय लिखापिता लि० पं०ह्रीमतविजयेन श्रीअणहिल्लपट्टणे क्षेत्रपालपाटकवास्तव्ये ॥ श्री ॥

[645] **टी०अन्तः**— संवत् १७३९ वर्षे फाल्गुनमासे शुक्लपक्षे त्रयोदश्यां गुरुवारे वृद्ध-तपागच्छे पूज्यभट्टारकश्रीतेजोरत्नसूरिस्तत्शिष्यपण्डितश्रीलावण्यरत्नगणि तच्छिष्य पं० श्रीज्ञानरत्नगणि–तच्छिष्यपं० श्रीजयसुन्दरगणि-तत्शिष्यउपाध्याश्रीरत्नसुन्दर–तच्छिष्यपं०श्रीविवेकसुन्द[र]गणितच्छिष्यौ पं०सिद्धिजसुन्दर–तद्गुरुभ्रातापं०–सुखसुन्दरेण स्ववाचनायालेखि थंभातिनगरे ।

[ 646 ] **अन्तः**— संवत् १८६० वर्षे मिति कार्तिक सुदि ६ भृगुवासरे उदयपुरनगरे माहाराणाजी श्रीभीमसिंहजीविजयराज्ये बृहत्खरतरगच्छे श्रीजिनमाणिक्यसूरिशाखायां श्रीजिनरंगसूरिआम्नायके सकलभट्टारकशिरोमणिजंगमयुगप्रधानभट्टारक श्री१०८ श्रीजिनचन्द्रसूरीश्वरात् उपाध्यायश्रीसुगणतिलकजी–तत्शिष्य पं० अमृतधीरजी–तत्शिष्य पं० रायअक्षय–तत्शिष्य पं० वृद्धिविजय लिपिकृतं शिष्य–पं० जयउदय वाचनार्थम् ॥

[ 651 ] **अन्तः**— इति श्रीसमयसुन्दरोपाध्यायविरचिता कल्पलतानाम्नी कल्पसूत्रवृत्तिः संपूर्णतां प्राप्ता, समुद्लेखितरां महोपाध्यायश्री५श्रीजयसागरगणि–शिष्यपं०श्रीलावण्यसागरगणि शिष्यभुजिष्यसकलपण्डितपञ्चाननपण्डितश्री५श्रीउदयसागरगणिचरणकमलयुगलचंचरीकायमान–पण्डितश्रीकनकसागरगणि–शिष्यग० लाभसागरेणाक्षुतरं श्रीआल्हणीयावासनगरे संवत् १७५८ वर्षे हिमतौ पोस वदि १३ भौमे सिद्धियोगे ॥

[ 654 ] **आदिः**— ॐ नमः सिद्धम्, श्रीशंखेश्वरपार्श्वनाथाय नमः ।
महोपाध्यायश्रीविमलहर्षगणिगुरुभ्यो नमः ॥
कल्याणांकुरवृद्धये जलधरं सर्वार्थसंपत्तिकृत्
पादाम्भोजयुगं जगज्जनमनःसंकल्पकल्पद्रुमम् ।
मेजुर्यस्य सुरा जरामृतिहृतं विश्वत्रयीकामधुक्
स श्रीवीरजिनेश्वरो जनयतात् नैःश्रेयसीं संपदम् ॥१॥

प्रणम्य निखिलान् सूरीन् स्वगुरुं सततोदयम् ।
कुर्वे स्वबोधविधये सुगमां कल्पदीपिकाम् ॥२॥
पुरिमचरिमाणकप्पो मंगलं वद्धमाणतित्थंमि ।
इह परिकहिआ जिणगणहराइथेरावलीचरित्तं ॥१॥

**अन्तः**— इति सामाचारीव्याख्यानं संपूर्णम् ।
संपूर्तौ च संपूर्णा श्रीकल्पदीपकेति श्रेयः ॥
गुणगणमणिगेहे श्रीतपागच्छसिन्धौ
कुमततिमिरभेदे आगरूकस्वभावाः ।
विजयिविजयदानाः सूरिसूर्या बभूवु–
स्त्रिभुवनजनपद्मोल्लासनैकस्वभावाः ॥१॥
तत्पट्टोदयसानुमालिशिखरे भास्वत्प्रभाभासुराः
जाताः श्रीगुरुहीरहीरविजया यद्देशनारंजितः ।
आपाथोधितटं जलस्थलवियत्प्राणस्पृशां पालनं
पृथ्व्यां कारितवानकब्बरमहाभूपालचूडामणिः ॥२॥
तत्पट्टाम्बुधिभासनैकशशिनः संजज्ञिरे सूरयः
श्रीमन्तो विजयादिसेनगुरवः प्रौढप्रतिष्ठास्पदम् ।
यैः शाहेः पुरतः कुवादिनिवहान् निर्जित्य दर्पोद्धुरान्
कीर्तिस्तम्भ इव व्यधायि गिरिजप्राणेशशैलच्छलात् ॥३॥

श्रीसूरेर्विजयादिसेनसुगुरोर्विश्वत्रयीमोदकृत्
पट्टप्रौढपयोधिवृद्धिविधये संपूर्णशीतांशवः ।
पूर्वाचार्यपरम्पराकुमुदिनीप्रीतिप्रदानोद्यमाः
सूरीशाः सततं जयन्ति सुव(?)निद्दोषसौख्यप्रदाः ॥४॥
तेषां राज्ये विमले श्रीमत्श्रीविजयदेवसूरीणाम् ।
श्रीमद्विजयातसिंहैः सूरिवरैः सेव्यमानानाम् ॥५॥
त्रिभुवनजनसेव्याः सर्वशास्त्राम्बुराशौ
जलविशयनदेश्याः श्रीतपागच्छधुर्याः ।
विमलविमलहर्षा रेजिरे वाचकेन्द्राः
सकलगुणगरिष्ठाः प्राप्तभूरिप्रतिष्ठाः ॥६॥
तत्पादाम्भोजभृङ्गो बुधजयविजयः स्वस्य चित्तप्रमोद-
प्राप्त्यर्थं मुग्धबुद्ध्याऽलिखदतिसुगमां दीपिकां कल्पसत्काम् ।
वर्षे सप्तार्णवांगविजयपरिमिते( १६७७ ) कार्तिकश्वेतषष्ठ्यां
श्रीमत्पार्श्वप्रभावाज्जयतु च सुचिरं वाच्यमानेयमार्यैः ॥७॥
प्रत्यक्षरं गणनया ग्रन्थेऽस्मिन् श्लोकसंख्यया ।
पञ्चत्रिंशच्छती जज्ञे द्वात्रिंशत्कलिता किल ॥८॥
विद्वद्वृन्दशिरोमणिपण्डितवरभावविजयगणिमुख्यैः ।
श्रीकल्पदीपिकेयं समशोधि जिनागमे भक्तैः ॥९॥

श्रीकल्पदीपिका लिखिता च प्रथमादर्शे स्वयं स्वशिष्यवृद्धिविजयगणि-प्रार्थनया ।

अनाभोगात् किञ्चित् किमपि मतिवैकल्पवशतः
किमप्यौत्सुक्येन स्मृतिविरहतो वापि किमपि ।
यदुत्सूत्रं सूत्रे कथमपि मया ख्यातमिह चेत्
क्षमन्तां धीमन्तस्तदसमदयाः पूर्णहृदयाः ॥१॥
नक्षत्राक्षतपूरितं मरकतस्थालं विशालं नभः
पीयूषद्युतिनालिकेरकलितं चन्द्रप्रभाचन्दनम् ।
यावन्मेरुकरे गभस्तिकटके धत्ते धरित्रीवधू-
स्तावन्नन्दतु तीर्थराजविनुतः श्रीसंघभट्टारकः ॥२॥

इति श्रीसंघप्रशस्तिः ॥

एकः सहस्रो द्विशता समेतः श्लिष्टस्तथा षोडशभि( १२१६ )र्विदन्तु ।
कल्पस्य संख्या कथिता विशिष्टा विशारदैः पर्युषणाभिधस्य ॥१॥

संवत् १६८६ वर्षे आषा[ढ]सित ८ तिथौ लिखितोयं वृद्धादशः स्वत एव वाच्यमानश्चिरं नन्दतात् ।

रत्नस्वर्णगजाश्वधान्यवसनालंकारलक्ष्मा(क्ष्म्या)कुलं
वृद्धिं प्राप्य यदीयजन्मनि ततो यो वर्धमानः स्फुटम् ।

ख्यातो दुर्जयभावशत्रुविजयाद् वीरश्च [विश्व]त्रये
स श्रीतीर्थविभुर्जिनो वितनुतां कल्याणमालामसौ ॥१॥
महोपाध्यायश्री १९ श्रीविमलहर्षगणि–तच्छिष्यसकलपण्डितशिरोमणिपण्डित – श्री १९ श्रीजयविजयगणि -तच्छिष्यपण्डितसभाशृङ्गारहारसकलविबुधमुखमंडनपण्डित– श्री १९ श्रीवृद्धिविजयगणि–तच्छिष्यमुनिरामविजयेनालेखि ।

[ 656 ] अव०अन्तः— प्राग्वाटज्ञातीयसा०भादाकेन अभिग्रहेण स्वद्रव्येण श्री०

[ 660 ] स्त०आदिः— श्रीशारदायै नमः ॥
सकलार्थसिद्धिजननी कविजननी प्रणम्य भावेन ।
श्रीहेमविमलसूरिं नत्वा स्मृत्वा च गुरुगदितम् ॥१॥
श्रीकल्पान्तर्वाच्यस्य व्याख्यानं जनभाषया ।
लिपिं कुर्वेहमज्ञानशिष्याणां ज्ञानहेतवे ॥२॥
प्रथम कल्प वाचवानो विधि लषीइं छइ ॥

[ 662 ] स्त०आदिः— ऐं नमः ॥ श्रीमहिमाप्रभसूरिगुरुभ्यो नमः ॥
नत्वा श्रीपार्श्वनाथं तं महिमाप्रभमुत्तमम् ।
श्रीमान् भावप्रभाचार्यो बालोपकृतिहेतवे ॥१॥
श्रीकल्पान्तरवाच्यस्य शीघ्रबोधविधायिनीम् ।
नातिविस्तरसंक्षेपां लोकभाषां करोम्यहम् ॥२॥ युग्मम् ।

स्त०अन्तः— श्रीपर्युषणाकल्प कहीइ तेहनो ए दशाश्रुतस्कधनउं एह कल्पसूत्र आठमु अध्ययन समाप्तम् ।
इति श्रीकल्पसूत्रनि संख्या कहीइ १२१६ ग्रन्थाग्रन्थ ए छइ । इति श्रीकल्पसूत्रसंपूर्णम् ।

श्रीपूर्णिमापक्षे भट्टारकश्री५श्रीभावप्रभसूरिविरचितायां श्रीटबाअर्थसंपूर्णमीर्ती( र्मिति ) लषित भाणरतनेन ।

मू०अन्तः— इति पज्जोसवणाकप्पो दसासुयस्क(ख)न्धस्स अट्ठम[म]ज्झयणं सम्मत्तं ॥
॥ संवत् १७९२ मिते । शाके १६५७ प्रवर्त्तमाने पौषमासे कृष्णपक्षे द्वितीयातिथौ श्रीसूर्यपुत्रवारे श्रीमति पत्तनरत्नेऽणहिल्लपूर्वपदे श्रीमति ढंढेरपाटके श्रीपौर्णिमापक्षीयप्रधानशाखीयभ०श्रीमहिमाप्रभसूरि–पट्टपद्मप्रभाकरभ०-श्रीभावप्रभसूरिभिः कृता श्रीकल्पान्तर्वाच्यस्य लोकभाषा मन्दमतीनां सुगमार्थविधायिनी शिष्यभाणरत्नस्य हेतवे । पं०श्रीहेमचन्दजीकथनेनेति ।

इदं श्रीकल्पसूत्रस्य नवमं व्याख्यानं समाप्तम् ॥ अधुना स्वस्य स्वस्य गच्छपरम्परातो ज्ञेयमिति ॥ श्रीः ॥

[ 663 ] स्त० अन्तः— श्रीविजयदेवसूरींद्रशिष्योपाध्यायनयविजयगणिभिः श्रीकल्पकल्पवृक्षस्तबकार्थं वृत्तितो लिखितः ।

[ 664 ] **अन्तः**— इति श्रीकल्पसूत्रबालावबोधः समाप्तः ॥
॥ इदम् पुस्तकम् श्रीमद् **विजयानन्दसूरि**(री श्वरजी-प्रशिष्यमुनि**हंसविज**-यजीना उपदेशथी लिखावितं ॥ लीखी ल[ हि ]या **गोपीनाथ पालीतणामध्ये** । संवत् १९५३ ना भाद्रवासुदि ११ गुरुवारः ।
कर कर कमर कुबडी, कर कर निचा नेण ।
बहुकष्टे पोथी लिखी, सुला रखीयो सेण ॥

[ 665 ] **अन्तः**— इति श्रीदशाश्रुतस्कन्धनुं आठमुं अध्ययन श्रीकल्पसूत्रटबान्तर्वाच्यसहितः संपूर्णः । सर्वग्रन्थाग्रं सार्द्धपांचसहस्रो ज्ञेयः । ५००(५५००) संवत् १७६८ वर्षे मार्गशिरसुदि १३ वारभौमे । पं० **राजहंसगणि**लेषितम श्री**विदिरपुरे** ।
( मूल )— सूत्रग्रन्थाग्रं १२१६ ॥
दशासुयखन्धस्स अदठमं अज्झयणं सम्मत्तं । श्रीकल्पसूत्र-टबु संपूर्णः । सूत्र १२१६, मूलटबु २२२४, सूत्रटबुमिलिते ३४३६ । **अंतर्वाच्यपृथक्** ।
अक्खरमत्ताहीणं जं किंचि पढियं अयाणमाणेण ।
तं खमह मज्झ सव्वं जिणवयणविणिग्गया वाणी ॥१॥

[ 667 ] **वृ:आदिः**— सूत्रमर्थ तथा **वान्तर्वाच्यमेतत्त्रय** समम् ।
वृत्तावायां समानीतमेतदाधिक्यमन्यतः ॥१॥
तत्र तावत् श्रीकल्पसिद्धान्तस्याधिकारत्रयवाचकेयं गाथा ॥

**अन्तः**— पज्जोसवणाकप्पो दसासुयक्खंधस्स अदठम[ म ]ज्झयणं सम्मत्तं । ग्रन्थाग्रम् १२१६ ॥
संवत् १७०५ वर्षे कार्तिकसुदि ८ तिथौ गुरुवासरे लिखितं भट्टारक-श्री**विनयप्रभसूरि**णा मुनि**कीर्तिरत्न**पठनार्थम् ॥ नक्षत्र० ॥१॥ **अनाभोग**० ॥२॥ उर्वी गुर्वी ॥३॥ अर्हन् मू० ॥४॥
अथास्य ग्रन्थस्य संख्यामाह श्लोकाः—
संख्या श्रीकल्पसूत्रस्य शतैर्द्वादशभिर्मिता ।
अनुष्टुभां तदुपरि युक्ता षोडशभिर्ध्रुवम ॥१॥ सूत्रसंख्या १२१६ ॥

**अथ**— श्रीकल्पान्तर्वाच्यस्य प्रोक्तं मानमनुष्टुभाम् ।
द्वाविंशतिशतैरेतमेकोनत्रिंशता सह ॥२॥
इतिकल्पान्तर्वाच्यसंख्या २२२९ ॥

**अथ**— श्रीकल्पस्तबुकार्थेस्मिन श्लोकमानं बुधैर्मितम् ।
द्वाविंशतिशतैः सम्यक् सप्तसप्ततिसंयुतैः ॥३॥
इति कल्पसूत्रटबार्थः, संख्या २२७७ ॥

**अथ**— त्रयाणामेवमेतेषां समग्रं मानमीरितम् ।
सहस्रपञ्चक सप्तशती द्वाविंशतिस्तथा । ४॥
इति सर्वमिलने ग्रन्थमानम् ५७२२ जाणवुं ॥

**वृ० अन्तः**— इति श्रीकल्पसूत्रावचूरिः समाप्ता ग्रन्थाग्रं सर्व सूत्रवृत्तिकयाभिस्सह ५७२२ श्रीपत्तनमध्ये लिखितम् ।

[ 668 ] स्त०आदिः— प्रणम्य प्रणताशेषवीरं वीरजिनेश्वरम् ।
स्ववाचनकृते कुर्वे कल्पव्याख्यानपद्धतिम् ॥१॥

अन्तः— संवत् १७४२ वर्षे कार्तिकसित १० दिने गणिप्रभुकुशललिखितम् । प्रभुकुशलगणिनाऽलेखि श्रीभादोसडानगरे सकलपण्डितपरम्परापारे(री)न्द्रपण्डितश्री१९ भोजकुशलग०-शिष्यन्यायकुशलवाचनार्थम् ॥

[ 669 ] अन्तः— संवत् १९३६ हस्ताऽक्षरविरामणपंचगौडखुबचन्दलिपीकृतं रत्नपुरीमध्ये ।

[ 670 ] स्त०अन्तः— इति श्रीआठमो वषांण संपूर्ण समाप्तम् ॥ पं०श्री५पं०ललितविजयजीगणीना सुसी (शि)ष्यपं०श्रीपं०भाग्यविजयजीगणी. तत्‌सी(शि)ष्यलपीकृतं ग्रामइडरे कल्पसूत्रं संपूर्ण समाप्तम् ।

संचत् १८७७ ना वर्षे आषाढ सुदी ४ दिनै सुकवारे मुनिरंगवीजें स्वआत्मारथें ।

[ 671 ] स्त०अन्तः— श्रीतपागच्छे सकलभट्टारकपुरन्दरभट्टारकश्री१००८श्रीश्रीवी(वि)जयप्रभसूरीश्वराणां शिष्यपण्डितश्री१०८श्रीपं०प्रेमविजयगणि तत्‌शीष्यपं०श्री·पं०विनीतविजयगणि तत्‌शिष्यपं०श्री५प०रविविजयगणि तत्‌शिष्यचरणसेवी पं०उमेदविजयग०लपीकृतं श्रीपल्हाणपूरमध्ये श्रीपल्लीवियापार्श्वनाथप्रसादात् ।

पण्डितश्रीरामविजय-पं०विनीत्यसक्त-पं०नेमविजयगणी-रांमसक्त परत-वेचाथि आपी छें । चांण[स]माग्राममध्ये ॥

[ 672 ] स्त०आदिः— नत्वा श्रीमन्महावीरं स्म(सृ)त्वा श्रीगौतम गुरुम ।
कल्पकल्पलतानाम्नि कल्पटीका प्रकल्प( ? तन्य)ते ॥१॥
नूतनानि पुराणानि प्राकृतान्यपि पाठतः ।
संस्कृतानि विधायात्र परोपकृतिहेतवे ॥२॥
नत्वा गुरुं च वाग्देवीं भक्त्या च परमया मुदा ।
श्रीरत्नचन्द्र अर्थाय लिख्यते कल्पवार्त्तिकम् ॥३॥
ए श्रीकल्प वीतरागनो कह्यो ॥ शास्त्र ते श्रीसर्वज्ञनु कह्युं... ...

[ 673 ] अन्तः— संवत् १९३१ ना वर्षे साके १७९६ ना प्रवर्त्तमान्ये(ने) अधिकमासमासे शुद्धपक्षे तिथौ १ प्रतिपदा चन्द्रवासरे संपूर्णम् ॥

लिषितं दि( ? द )वै श्री५लक्ष्मीदास महादेव गाम वेरा( ? वारे )-ग्रामध्ये वास्तव्यं(व्यः) । पठनार्थे । पूज श्री५कानजि-तत्सीष्यरामजि-तत्सिष्य-गोवालजि इदं पुस्तकं पठनार्थम् ॥

[ 674 ] मू०अन्तः— पज्जोसवणाकप्पो दसासुयखंधस्स अट्ठमज्झयणं सम्मत्तं । ग्रन्थाग्रन्थ-सूत्रसंख्या १२१६, अर्थसंख्या १५६२, कथासंख्या २९२५, सर्वसंख्या [५७०३] यादृशं० ॥१॥

सं० १८४३ वर्षे मितिवैशाखसुदि १५ दिने लिपिकृतं सेहग्रामे ।

(अन्यहस्ताक्षरेण लिखितमिदम्- )

गुरां प्रतापविजेजीने आ पर्त रु. ६॥ पुनमचन्द मे दीनी ।

[675] स्त०आदिः— कल्पसूत्रबालावबोधः लिख्यते । गाथा—

प्रणम्य प्रणताशेषं वीरं वीरजिनेश्वरम् ।
स्ववाचनकृते कुर्वे कल्पव्याख्यानपद्धतीम् ॥

अन्तः— रूणवाडमध्ये लिखितम् । इति श्रीकल्पसूत्रं संपूर्णम् ।

सकलपण्डितोत्तमपण्डितश्रीलाभकुशलगणि-शिष्यपण्डितरत्नकुशलग०-शिष्यपण्डितश्री-गंभीरकुशलग०-शिष्यपण्डितश्रीहेमकुशलग०-शिष्यपण्डितवृलपतकुशल(छेम) स्वयं वाचनार्थे ॥

संवत् १८७७ वर्षे प्रथमज्येष्ठकृष्ण १० रविवासरे ।

[676] स्त० आदिः— श्रीसर्वज्ञाय नमः ॥

सकलार्थसिद्धिजननीं कविजनजननीं प्रणम्य भावेन ।
श्रीहेमविमलसूरिं नत्वा स्मृत्वा च गुरुगदितम् ॥१॥
श्रीकल्पांतर्वाच्यस्य व्याख्यानं जनभाषया ।
लिपिं कुर्वेऽहमज्ञानशिष्याणां ज्ञानहेतवे ॥२॥

स्त० अन्तः— इति श्रीकल्पसूत्रनुं टबु सूत्रार्थं संपूर्णम् ।

सूत्रार्थग्रन्थसंख्याग्रन्थाग्रम् ६०२९ ॥

संवत् १७५९ वर्षे शाके १६२४ प्रवर्त्त० मागशर सुदि ५ शुक्रे ।

मू० अन्तः— इति श्रीकल्पसूत्र संपूर्णं सूत्रग्रन्थाग्रसंख्या १२१६ ।

संवत् १७५९ वर्षे मागशर सुदि ५ शुक्रे लखितम् ॥

[677] स्त० आदिः— श्रीहेमविमलं वीरं वीरं सवा(वै)रिनाशने(कम्) ।
प्रणम्य वाग्व(वाचं) कल्पस्य टवार्थं रचयाम्यहम् ॥१॥
विलोक्य संदेहविषौषधीवृत्तिं तथापरां टीकाम् ।
सुगमं बालविबोधाय नमिकमि(नमस्)कृत्य गुरुचरणान् ॥२॥

स्त० अन्तः— संवत् १६९२ वर्षे कार्त्तिकवदि ६ गुरौ संपूर्णमिदं शास्त्रम् ।

[679] आदिः— नमः श्रीवर्धमानाय श्रीमते च सुधर्म्मणे ।
सर्वानुयोगवृद्धेभ्यो वाण्यै सर्वविदस्तथा ॥१॥
अज्ञानतिमिरान्धानां ज्ञानाञ्जनशलाकया ।
नेत्रमुन्मीलितं येन तस्मै श्रीगुरवे नमः ॥२॥
सूरिमु[द्]योतनं वन्दे वर्धमानं जिनेश्वरम् ।
जिनचन्द्रप्रभुं भक्त्याऽभयदेवमहं स्तुवे ॥३॥
श्रीजिनवल्लभ-जिनदत्तसूरि-जिनचन्द्र-जिनपतिसुरेन्द्राः ।
लक्ष्म्यै जिनेश्वर-जिनप्रबोध-जिनचन्द्रगुरवः स्युः ॥४॥
सूरिर्जिनादिकुशलो जिनप्रभसूरिः
सूरिर्बभूव जिनलब्धिरधीतसूरिः ।
तेजोमयोपि जललोचनपूर्णचन्द्र-
श्चन्द्रोपमानगुण एष जिनादिचन्द्रः ॥५॥

दत्तस्तदीयपदपद्मदिवाधिराजः
प्राप्तोदयोऽजनि जिनोदयसूरिराजः ।
विभ्राजते गुरुवरो जिनराजसूरि—
र्भाग्याद्भुतः समभवज्जिनभद्रसूरिः ॥६॥
तत्पट्टे जिनचन्द्रास्तदन्वये समुद्रसूरिजिनहंसाः ।
आसीज्जिनमाणिक्या युगवरजिनचन्द्र–जिनसिंहाः ॥७॥
ज्ञानक्रिया–दुष्करसत्तपोभिः प्राप्तप्रतिष्ठा जगतीतले यैः ।
राजन्वती गच्छपरम्परेयं जयन्तु ते श्रीजिनचन्द्र[ सूर ]यः ॥८॥
अब्धिर्लब्धिकदम्बकस्य तिलको निःशेषसूर्यावले–
रापीडः प्रतिबोधनैपुणवतामग्रेसरो वाग्मिनाम् ।
दृष्टान्तो गुरुभक्तिशालिमनसां मौलिस्ततः श्रीजुषां
सर्वाश्चर्यमयो मयीष्टसमयः श्रीगौतमः स्तान्मुदे ॥९॥
वन्दामि भद्दबाहुं पाईणं चरमसकलसुयनाणिं ।
सुत्तस्स कारगमिसिं दसाण कप्पे य ववहारे ॥१०॥

**अन्तः**— श्रीजिनदत्तसूरि श्रीजिनकुशलसूरि तदनुक्रमइ युगप्रधान भट्टारक श्रीजिनचन्द्रसूरितणी आज्ञा प्रवर्त्तई श्रीहर्षसारवाचक-शिष्यश्रीशिवनिधानगणिरचिते श्रीकल्पबालबोधे सप्तव्याख्यानपद्धतिर्विहिता ।

[ 680 ] **आदिः**— प्रणम्य श्रीमहावीरं नत्वा च श्रुतदेवताम् ।
व्याख्यानं कल्पसूत्रस्य लिख्यते लोकभाषया ॥१॥

**अन्तः**— इति श्रीकल्पसूत्रबाला[व]बोधः सुगमः संपूर्णम्(र्णः) ।
संवत् १८८३ रा फाल्गुणकृष्णप्रतिपत्कर्म्मवाव्यामिति । श्रीमच्छुदूधदन्तीग्रामे प्रतिरेषा लिखिता सकलपंडितशिरोमणि-पंडितमुकुटायमानपं०श्री१०८श्री-पं०श्रीभक्तिविजयजीगणि–तच्छिष्यपं०श्रीमत्रूपविजयजी-तच्छिष्यमुनिचतुरविजय–वाच्यमान्य(नं) चिरं न[न्]द्यात् ॥श्री॥ यादृशं० ॥१॥ शांतिनाथजिनप्रासादात् ।

[ 681 ] **अन्तः**— सकल पंडितोत्तमपंडितश्री ५ पं०श्रीदर्शनविजयगणि-शिष्यपण्डितश्री ५ पं०श्रीकांतिविजयगणि–शिष्यपाय(द)रज्ज(जो)रेणु सदा आज्ञाकारी दासानुदास सदा चरणसेवि-पं०नायकविजयगणिलिखिता परोपकाराय ।
संवत् १७९८ वर्षे प्रथमश्रावणसुदि १ वार गुरौ संपूर्णः ॥

[ 682 ] **आदिः**— वर्णवियइ सबंध श्रीकल्पवाचना वर्ण्णमान । कल्पशब्द अनेकभेदे प्रवर्त्तइ । यथा मणिकल्प । ओषधीकल्प । गुटिकाकल्प । अंजनकल्प ।

[ 683 ] **आदिः**— कल्याणानि समुल्लसन्ति विलसत्युद्दामभाग्यालय–
स्ताः संपन्महिलाविलासबहुलाः स्नेहोज्ज्वला श्रृण्वते ।
तान्तिः शान्तिमुपैति भीतिततिः साकं न किं किं भवेद्
यद्वा मङ्गलमुज्ज्वलं सुविपुलं तस्यानुभावाद् भुवि ॥१॥

नमस्कार श्रीशांतिनाथजीने पछें श्रीकल्पसूत्रनी स चायं श्रीकल्पः श्रीसर्वज्ञप्रणीतमेव शास्त्रप्रमाणं चक्रुः(क्र) । सर्वज्ञत्वाभावे शास्त्रस्यापि प्रामाण्यासंभवात् इदं च कल्पाभिधानं महाशास्त्रं श्रीधर्ममहानरेंद्रनिवासमूलराजधानीसमानं विद्यते शास्त्रं तु तदेव लोकानामुपकारकं स्या[द्] यत्र धर्मः । श्रीधर्म्मदेव-श्रीपांडव-श्रीराम-श्रीविक्रमादित्य-श्रीनलनरेंद्रप्रमुखाणां कीर्त्तिकौमुदी अद्यापि जगन्मध्ये उद्द्योतं परितस्थं(त) तनी(नो)ति । तथाहि जिम वृक्षमांहि कल्पद्रुम पुष्पमांहिं जातिकुसुम । नरेन्द्रमांहिं रांम । रूवन्तमांहिं कांम । देवतामांहिं इन्द्र । ज्योतिचक्रमांहिं जिम चन्द्र । वाजित्रमांहिं भंभा । जिम स्त्रीमांहिं रंभा । सतीमांहिं सीता । स्मृतिमांहिं गीता । साहसीकमांहिं विक्रमादित्य । ग्रहणमांहिं आदित्य । धनुर्द्धरमांहिं अर्जुन । वनमांहिं नन्दनवन । रत्नमांहिं चिंतामणी । आभरणमांहि चूडामणि । पर्वतमांहि मेरुपर्वत । गजमांहिं एरावण । धातुमांहिं कांचन । गवामांहिं कामधेनु । रसमांहिं घृत । जलमांहिं अमृत । तथा धर्म्मार्थकामरूपेषु त्रिष्वपि पुरुषार्थेषु श्रीधर्म एव मुख्यः । ते धर्ममांहिं जीवदया मुख्य आणवी ।

[ 684 ] बा० आदिः— एह संसारमांहि अनेक पर्व छई । दीपालिकापर्व रजोत्सवपर्व अक्षात्रीज तणु पर्व० ।

[ 689 ] अन्तः— इति कल्पान्तर्वाच्यानि समाप्तानि ।

भट्टारकप्रभुश्रीजिनहंससूरिभिः तदुद्धारश्च श्रीमन्निर्मलतपगच्छगगनाभभासप्रोद्यत्सहस्रकिरणायमानभट्टारकपुरन्दरश्री ६ हीरविजयसूरि-तत्पट्टविशिष्टविभूषणायमा[न]भट्टारकपुरन्दर श्री ६ विजयसेनसूरीश्वरराज्ये पण्डितचक्रचूडामणीयमानपंडितश्रीकुशलवर्धनगणि-शिष्यशिशुना नगर्षिगणिना कृतः, तथा लिखितश्च स्ववाचनकृते ।

[ 691 ] अन्तः— सं० १६७५ वर्षे आषाढ शुदि १३ गुरौ श्रीपूर्णिमापक्षे भ० श्रीललितप्रभसूरिविजयराज्ये वाचकगुणमेरुलिपीकृतं वापीग्रामे ॥

[ 692 ] अन्तः— संवत् १६७७ वर्षे आश्विनसित ९ सोमे कर्पटवाणिज्यनगरे पंडितश्रीरामविजयगणि-शिष्यपं० श्रीजयविजयगणिनाऽलेखि प्रतिरियम् । गणितेजविजयवाचनार्थम् ।

[ 693 ] अन्तः— यथा स विप्रः किल तीव्रकोपात् कुद्वैरशोध्यो बहिरेव चक्रे ।
कोपं न यः पर्वदिनेपि जह्यात् स संघबाह्यो जिनवाक्यमेतत् ॥८॥

इति श्रीकल्पांतर्गतम् ।

शक्रस्तवे१ गर्भसंचारः२ गर्भस्थाभिग्रहः३ श्रीवीरकुटुम्बविचारः४-श्रीवीरपरिवारमोक्षः५ जिनानामंतराणि६ स्थविरावली७ सामाचारी८ कालिकाचार्यकथा९ श्रीकल्पव्याख्यामोक्षस्थानानि ॥

गच्छनायकपरमाराध्यपरमगुरुभट्टारकप्रभुश्रीसोमसुन्दरसूरिपादप्रसादेन श्रीसंघस्य कल्याणं भवतु । शिवमस्तु० ॥१॥—ग्रं० १२०६ ।

[ गुर्वावली ] —

उर्वी गुर्वी तदनु जलदः सागरः कुम्भजन्मा
व्योमाघातौ रविहिमकरौ तौ च यस्यांह्रिपीठे ।
स प्रौढश्रीजिनपरिवृढ[:] सोमिलस्य प्रशान्ता
स श्रीसंघस्त्रिभुवननतः कस्य न स्यान्नमस्यः ? ॥१॥
नक्षत्राक्षतपूरितं० ॥२॥

श्रीसंघाशीर्वादाः । तत्पट्टे श्रीमहागिरि–सुहस्ती१, तत्पट्टेश्रीसुस्थित–सुप्रतिबद्धौ, तत्पट्टे श्रीइन्द्रदिन्नसूरिः१०, श्रीदिन्नसूरिः११, श्रीसिंहगिरिः१२, श्रीवज्रस्वामी१३, श्रीवज्रसेनः१४, श्रीचन्द्रसूरिः१५, श्रीसामन्तभद्रः१६, श्रीदेवसूरि –– देवसूरिः१७, श्रीप्रद्योतनसूरिः१८, श्रीमानदेवसूरिः१९, श्रीमानतुङ्गसूरिः २०, श्रीवीराचार्यः२१, श्रीजयदेवसूरिः २२, देवानन्दसूरिः२३, श्रीविक्रमसूरिः२४, श्रीनरसिंहसूरिः२५, श्रीसमुद्रसूरिः२६, श्रीमानदेवसूरिः२७, श्रीविबुधप्रभसूरिः२८, श्रीजयानन्दसूरिः२९, श्रीरविप्रभसूरिः३०, श्रीयशोदेवसूरिः३१, श्रीप्रद्युम्नसूरिः३२, श्रीमानदेवसूरिः३३, श्रीविमलचन्द्रसूरिः३४, उद्द्योतनसूरिः३५, श्रीसर्वदेवसूरिः ३६, श्रीदेवसूरि ३७, श्रीसर्वदेवसूरि ३८ श्रीयशोभद्रसूरिः३९ श्रीमुनिचन्द्रसूरिः- ४०, अजितदेवसूरिः४१, श्रीदेवसूरिः४२, श्रीविजयसिंहसूरि ४३, श्रीसोमप्रभसूरिः४४, श्रीमणिरत्नसूरिः४५, श्रीजगच्चन्द्रसूरिः४६, श्रीदेवेन्द्रसूरिः४७, श्रीविद्यानन्दसूरिः४८, श्रीधर्मघोषसूरिः४९, श्रीसोमप्रभसूरिः५०, श्रीसोमतिलकसूरिः- ५१, श्रीदेवसुन्दरसूरयः५२, श्रीसोमसुन्दरसूरयः५३ ।

[ अन्यदीयहस्तेन लिखितोऽयं श्लोकः— ]

मोहक्षयादनुभवन्नपि नाथ ! मर्त्यो नूनं गुणान् गणयितुं न तव क्षमेत ।
कल्पान्तवान्तपयसः प्रकटोपि यस्मान्मीयेत केन जलधेर्ननु रत्नराशिः ॥१॥

[ 694 ] **अन्तः**— संवत् १६५० वर्षे आसो मासे शुक्लपक्षे चतुर्दशी(श्यां) लिषितः ॥

[ अर्वाचीनलेखनम् ]

अंतर्वाच्यं संपूर्णम् । पण्डितश्रीचन्द्रविज[य]नी परत ॥ छ ॥

[ 695 ] **अन्तः**— इति श्रीकल्पांतर्वाच्यं संपूर्णम् ।

संवत् १६२९ वर्षे आसोज वदि दिने श्रीमच्छ्रीबृहत्खरतरगच्छे गगननभोमणिकल्पश्री ५ जिनदेवसूरिविजयराज्ये श्रीआचार्यश्रीशांतिसागरसूरि-शिष्यश्रीवाचनाचार्यश्रीविमलकीर्त्तिगणि तत्शिष्यवा० श्रीदेवसमुद्रगणि-तत्शिष्यपं० भुवनसिंहगणि-वा० भावसुन्दरगणि–वा० सौभाग्यसुंदरगणि शिष्यसुगुणसागरमुनि–सतीर्थ्यपं० दयाकुशलेनालिषितं स्वगुरुसांनिध्ये स्वस्वशिष्यशिष्यानुशिष्यादिपठनकृते । भद्रं भूयाल्लेखकस्य श्रीजयतारणिनगरे श्रीभूपतिभूपतौ । श्रीः । चिरंजीवी लाषणस्य कृते प्रतिः ॥ वाच्यमाना चिरं नन्दतु ॥

[ 696 ] **अन्तः**— इति श्रीकल्पान्तर्वाच्यानि श्रीजिनहंससूरिराजैः संस्कृत्य लेखितानि । लिखितानि च विद्वत्सभाशिरोरत्नसधर्मपूज्य-प० सारधर्मगणि–शिष्यकुलसागरगणिभिरात्मकृते । श्रीमत्पत्तन[न]गरे मार्गशीर्षमासे शुक्लपक्षे शुक्रवारे दशमीदिने समाप्तानि ।

[ 700 ] **अन्तः** – इति श्रीकल्पसूत्रांतर्वाचिः(? च्यः) समाप्तः ॥

संवत् १६७७ वर्षे अश्विनमासेऽसितपक्षे तृतीयायां बुधे श्रीपूर्णिमापक्षे परमपूज्यभट्टारकश्री५श्रीललितप्रभसूरींद्राणां विजयराज्ये वाचकगुणजी लिपीकृतं–थारवाडाग्रंगे ॥

यदक्षर-पदभ्रष्टं स्वर–व्यञ्जनवर्जितम् ।
तत् सर्वं कृपया देव! क्षमस्व परमेश्वर ! ॥१॥

[ 701 ] **अन्तः**— महत्पंचकल्पभाष्यम् । संघदासक्षमाश्रमणविरचितं समाप्तमिति ॥

गाहग्गेणं पंचवीस सत्ताइं चतुहत्तराइं गाथा ॥२५७४॥
सिलोयग्गेणं बत्तीस सताणि दस अट्ठासहियाइं ॥३२१८॥

संवत् १६७२ वर्षे श्रावणवद ११ दिने श्रीमज्जेसलमेरुमहादुर्गे सकलक्षितिपालमण्डलमण्डनराउलश्रीकिल्याणदासजी–कूवरश्रीमनोहरदासजीविजयराज्ये-श्रीखरतरविधिपक्षे सकलजिनशासनरक्षाकरणदक्षसाहिसलेमप्रदत्त–सवाईयुगप्रधानजिनशासनपतिसाहुविरुदद्वयधारकश्रीजिनचन्द्रसूरीश्वर–पट्टालंकारयुगप्रधानभट्टारकश्रीजिनसिंहसूरिषु भणसालीगोत्रीयश्रीमलसाह–पुत्रथाहरु-तत्पुत्ररत्नहरिराज–मेघराजयु(यु)तेन स्वकृन्नूतनभाण्डागारे श्रीपञ्चकल्पबृहद्भाष्यं पं० थिराकेन लिपीकृतम् ।

संवत् १७४५ वर्षे काती(र्तिक)सुदि ५ दिने भ० थाहरु-पुत्रमेघराज-तत्पुत्रभोजराजपुत्र्या संखवालथिरराजधर्मपत्न्या श्राविकाकसूनाम्न्या विहारिता प्रतिरियं श्रीजिनचन्द्र[सूरी]श्वराणां ज्ञानभक्त्यै श्रीजेसलमेरमध्ये ।

[ 702 ] **अन्तः**— सव्वसुयसमूहमती वामकरगहियपोत्थया देवी ।
जक्खकुहंडासहिया देंतु अविग्घं भणंताणं ॥१॥

सवत् १९१२ वर्षे वैशाख वदि ११ गुरुवारे । लिपीकृतं गुसांईशंकरयतिश्रीविक्रमपुरे वरे रम्ये ।

[ 703 ] **अन्तः**— पंचकल्पचूर्णिः समाप्ता ॥ ग्रन्थप्रमाणं सहस्त्रत्रयं शतमेकं पंचविंशत्युत्तरं लिखितं श्रीमद्दाम्रदेयाचार्यकृते पञ्चकल्पपुस्तकम्, अंकतोऽपि ग्रन्थप्रमाणम् ३१२५ ॥

संवत् १९१२ वर्षे वैशाखशुदि ८ दिने लिखितम् । गुसाईशंकरयतिना श्रीमद्विक्रमपुरे वरे ।

धन्यास्ते येऽपि तारुण्ये त्यक्त्वा साम्राज्यसंपदम् ।
दुर्द्धरं च तपस्तप्त्वा पुनर्नायान्ति संसृतौ ॥

[ 711 ] **आदिः**— ॥ ॐ नमः श्रीजिनप्रवचनाय ॥

जयति महोदयशाली भास्वान् श्रीवर्द्धमानतीर्थपतिः ।
विशदं चरणपथं सा तपस्थितिर्यदुदिता तनुते ॥१॥
जयति प्रवचनदीपः प्रतिहतदुरपोहमोहतिमिरौघः ।
चित्रं निरञ्जनोऽयं जगति गुणग्रामवृद्धिकरः ॥२॥
सकलत्रिलोकविस्मयविधायिनिस्सीमधीगुणातिशयान् ।
बहुविधलब्धिसमृद्धान् निखिलानपि गणधरान् नौमि ॥३॥

प्रणमामि विश्रुतं श्रीजिनभद्रगणिक्षमाश्रमणमुख्यम् ।
संक्षिप्तजीतकल्पं महाश्रुताद् यः समुद्दध्रे ॥४॥
श्रीसोमप्रभसूरीन् गुरूत्तमान् स्तौमि विश्रुतातिशयान् ।
सुविहितहिताय विहितः सव्यासो यैरसावेव ॥५॥
श्रीसोमतिलकसूरीन् वन्दे विख्यातवैभवाभ्युदयान् ।
यैरस्य जीतकल्पस्यातेने वृत्तिरतिविशदा ॥६॥
मन्दमतिबोधहेतोरतिगहनमहागमावगाहनया ।
कालानुभाववशतो व्युच्छिन्ना सा तदैव परम् ॥७॥ युग्मम् ॥
जगति जयन्ति गरिष्ठा गुरवः श्रीदेवसुन्दरमुनीन्द्राः ।
संप्रति निष्प्रतिमगुणप्रभाः प्रभावाद्भुता विदिताः ॥८॥
जे(? ये) निजवचनसुधाञ्जनवशेन शिष्यस्य मादृशस्यापि ।
उद्घाटयन्ति लोचनमान्तरमज्ञानतिमिरभृतम् ॥ ९ ॥
तस्याः पुनरालेखे चित्रकलाकौशलेन विकलोपि ।
तैः स्वविनेयकनिष्ठोप्यादिष्टोऽयं ततो यतते ॥१०॥
यद्यपि साहसमेव कुर्वन् हास्योऽस्मि तदपि किं कुर्वे ।
यन्मामत्र प्रसभं प्रेरयति गुरुप्रसादोऽयम् ॥११॥

**अन्तः**— एतासां च गाथानां विवरणमपि प्रायस्तद्रूपमेव तत्तद्ग्रन्थगतमत्र लिखितमस्तीत्यवगन्तव्यम् । इदं चैवंविधं जीतकल्पसूत्रं कालानुभावतः प्रायो निराधारपारमेश्वरप्रवचनाधारभूतैः निर्म्मलसंयमकमलाहृदयालङ्कारहारकल्पैः सकलसुविहितव्रातशिरोमणिभिः विश्वविख्यातश्रीतपामहागच्छगगनांगणनभोमणिभिः परमगुरुश्रीसोमप्रभसूरिभिः पवित्रचारित्रैकतानमानसैः मन्दतरमेधाधारणावगमविनेयजनानुग्रहार्थमेव अमुद्रसकलपरमागमसमुद्रं महाप्रयत्नेनावगाह्यामृतकल्पं प्रकटमकारीति ।

इति यतिजीतकल्पवृत्तिर्जगत्प्रतीतश्रीतपागच्छाधिराजसुविहितशिरोमणिभट्टारकप्रभुश्रीदेवसुन्दरसूरि–शिष्यश्रीसाधुरत्नसूरिकृता ।

वर्षे तर्क्क–शराब्धि–चन्द्रगणिते(१४५६) श्रीविक्रमार्काद् गते
　　गुर्वादेशवशाद् विलोक्य सकलाः कल्पादिशास्त्रावलीः ।
सूरिश्रीयुतदेवसुन्दरगुरोः शिष्याग्रणीरातनो–
　　देतां श्रीयतिजीकल्पविवृतिं श्रीसाधुरत्नाह्वयः ॥१॥
प्राज्ञैरुद्देशतो वृत्तौ ग्रन्थमानं विनिश्चितम् ।
सहस्राः पञ्च श्लोकानां शतैः सप्तभि(५७००)रन्विताः ॥२॥

[712] **अन्तः**— जीतकल्पबृहच्चूर्णौ व्याख्या शास्त्रानुसारतः ।
श्रीचन्द्रसूरिभिर्दब्धा स्वपरोपकृतिहेतवे ॥१॥
मुनि नयन-तरणि(१२२७)वर्षे श्रीवीरजिनस्य जन्मकल्याणे ।
प्रकृतग्रन्थकृतिरियं निष्पित्तिमवाप रविवारे ॥२॥
संघ-चैत्य-गुरूणां च सर्वार्थप्रविधायिनः ।
यशाभयकुमारस्य वसतौ दब्धा सुबोधकृता ॥३॥
　　एकादशशतविंशत्यधिकश्लोकप्रमाणं ग्रं० ११२० ॥

[ 713 ] **अन्तः**— इति नुतिकृतसुकृतः श्रुतरहस्यकल्पजीतकल्पस्य विवरणलवं करिष्ये[ऽ]स्तस्मृति-बीजप्ररोहाय ।

पुनरयं पात्रे सुपरीक्षितगुणे आत्यकाभ्वमवस्तापछेदनिकषसहे संविग्नेन गीतार्थेन पुनरन्यस्मिन् येन जीतकल्पदाय[क-प्राह]कौ द्वावपि कर्म्मनिर्ज्जरया शुद्धयतश्चेति ।

इति श्रीतिलकाचार्यविरचिता जीतकल्पवृत्तिः समाप्ता ।

श्रीमांश्चन्द्रप्रभः सूरिर्युगप्राधान्यभागभूत् ।
तदासनमलंचक्रुः श्रीधर्म्मघोषसूरयः ॥१॥
तत्पट्टश्रीभुजोऽभूवन् श्रीचक्रेश्वरसूरयः ।
श्रीशिवप्रभसूरिस्तत्पट्टश्रीहारनायकः ॥२॥
तदीयशिष्यलेशोहं सूरिः श्रीतिलकाभिधः ।
अनन्यसमसौरभ्यश्रुताम्भोजमधुव्रतः ॥३॥
इमामीदृग्विधां चूर्णेस्तस्याश्चोपनिबन्धतः ।
गुरूणां संप्रदायाच्च विज्ञायार्थं स्वशक्तितः ॥
अकार्षं जीतकल्पस्य वृत्तिमत्यल्पधीरपि ।
सा विशोध्या श्रुतधरैः सर्व्वैर्मयि कृपापरैः ॥५॥
सहस्रमेकं श्लोकानामधिकं सप्तभिः शतैः ।
प्रत्यक्षरेण संख्याय [मान]मस्य विनिश्चितम् ॥६॥

[ 717 ] **आदिः**— कयपवयणप्पणामो जीअगयं सहुठदाणपच्छित्तं ।
सपरहियधार[ण]ट्ठा जहासुअ किंपि जंपेमि ॥१॥

**अन्तः**— इय एस जीयकप्पो समासओ सुविहियाणुकंपाए ।
कहिओ देओ अ पुणो पत्ते सुपरिच्छियगुणंमि ॥१३७॥
सिरिदेविंदसुणीसरविणेयमिरिधम्मघोससूरीहिं ।
इय सपरधारणट्ठा रइयं सोहंतु गीयत्था ॥१३८॥

जीतकल्पसूत्रम् ॥

[ 725 ] **अन्तः**— संवत् १८७३ बरषे(वर्षे) असाड(षाढ)मासे कृस्न(ष्ण)पषे(क्षे) वार ११ सु-(शु)क्वार पुजजीश्री १०८ श्रीसांमादासजी-तत्सिप्यपुजजीश्री १०८ श्रीगाढमल-जी-तत्सिष्यपूजजीश्री १०८ श्रीकनारामजी-तत्सिष्यलष(लिषि)तं जगराम । साहेपुरामध्ये ।

[ 726 ] **अन्तः**— श्रीपूर्णिमापक्षे प्रधानभट्टारकश्रीजयसिंहसूरि-पट्टालंकारश्रीजयप्रभसूरिणा एषा पुस्तिका लिखिता । संवत् १५२१ वर्षे मार्गशि[र]वदि ४ रविवासरे संपूर्णीकृता ।

[ 731 ] **वृत्त्यारम्भः**— अथ नन्दिः इति कः शब्दार्थः ? उच्यते-'टुनदु समृद्धौ' इति अस्य धातोः 'उदितो नुम्' इति नुमि विहिते नन्दनं नन्दिः, प्रमोदो हर्ष इत्यर्थः । नन्दिहेतुत्वात् ज्ञानपञ्चकाभिधायकं अध्ययनं अपि नन्दिः, नन्दन्ति प्राणिनः अनेन अस्मिन् इति वा नन्दिः ।

सूत्रस्यान्तः— एष एव सर्वत्र श्रवणविधिनियमः उद्घट्टितज्ञविनेयानां सकृत् श्रवणत एव अशेषग्रहणदर्शनात् इति कृतं प्रसंगेन तदेतत् श्रुतज्ञानं तदेतत् परोक्षम् इति । अथाग्रे सूत्रपाठः ।

[ 734 ] स्त० अन्तः— इति श्रीनंदीसूत्रटबार्थः संपूर्णः ॥

संवत् १७८१ वर्षे चैत्र सुदि १ गुरुवासरइ ।

मू०अन्तः— इति श्रीनंदीसूत्रं संपूर्णः(र्णम्) ।

संवत् १७८१ वर्षे चैत्रशुदि १ गुरुवासरे लिखितं पं०श्री ५ श्रीजयसागरगणिभिः ।

[ 737 ] अन्तः— संवत् १६९४ वर्षे पौष शुदि १२ सोमे लषितं राउलकेसव ।

संवत् १६९४ वर्षे पोस(ष)शुदि पूर्णिमायां तिथौ श्रीस्तंभतीर्थवास्तव्यश्रीश्रीमालीज्ञातीयवृद्धशाखीय-दोसीलहूया-भार्याबाईसंपाई तयोः पुत्राः दोसीसुमतिदास-दो०कीका-दो०केशव-दो०सुमतिदास-भार्यासोभागदे-तत्पुत्र-दो०-जयकरणेन स्वबन्धुदो०कानजीप्रमुखकुटुम्बयुतेन । चित्कोशवृद्धयर्थं स्वश्रेयसे च ४५ प(पि)स्तालीशआगमसूत्रवृत्तिपुस्तकं लिषापितम् । तन्मध्ये श्रीदशमांगसूत्रपुस्तकं लिखापितम् । शुभं भवतु नन्दीपुस्तकम् ।

[ 741 ] अन्तः— सं० १८९२ वर्षे फागुणसुदि १३ दिने श्रीमेशाणामध्ये लिषितं पं० सुरेन्द्रविजयग० गां०लालचन्दकुबेरचन्दवाचनार्थम् । श्लोक ३००८(३०८) ।

[ 746 ) अन्तः— किं वक्त्रेन्दुसमुद्भवद्युतिभरः किं हृद्यविद्यावधू-

लीलानिर्म्मितसुस्मितं किमु सुमस्तोमक्षमाभूरुहः ।

इत्थं यस्य वितर्क्यते सुकविभिर्व्याख्यानवाग्वैभवः

शुभ्रोऽतीवजयप्रभः स जयतां सूरीश्वरः सर्वदा ॥१॥

संवत् १५२६ वर्षे मार्ग्गशीर्षसुदि १ तिथौ शनिवारे शुभमुहूर्ते व्यलीलिखत् ।

[ 747 ] अन्तः— संवत् १५३१ वर्षे ज्येष्ठ सुदि ९ रवौ तपागच्छे गच्छनायक-श्रीलक्ष्मीसागरसुरि-तत्शिष्यश्रीजिनहंसूरि-तत्शिष्यपं०नेमिकीर्ति[ना] लिखापिता श्रीअणहिल्लपुरपत्तनवास्तव्यऔदीच्यज्ञातीयव्यासश्रीनाथसुत-लेखककान्हालिखितम्, दूलप्राकारमध्ये लिखितम् ।

[ 752 ] अन्तः— संवत् १५८५ वर्षे भाद्रपदमासे श्रीपत्तननगरे वहुरागोत्रे श्रीश्रीमालज्ञातौ व०लाडण-पुत्रव०सिंहा-भार्याअमरी-पुत्रव०हरषाकेन भार्या श्रा०राणी-पुत्रव०कमलसी, व०विमलसी । कमलसी-भार्याश्राविकाकमलादेपुत्रव०सहसकरण-प्रदथकरण-विजयकरण । विमलसी-भार्याविमलादे-पुत्रव०वच्छाप्रमुख-परिवारयुतेन श्रीसिद्धान्तकोशः श्रीआवश्यकबृहद्वृत्ति[:] स्वगृहे पुण्यार्थे भाण्डागारे कारापिता ।

[ 755 ] अन्तः— संवत् १५२० वर्षे ज्येष्ठशुदि ८ सोमे वारे आंबालिषितम् मं०केल्हालि० ।

( अन्यदीयहस्तेन लिखितम्- )

ग्रन्थाग्रम् ४६४० । प्राग्वाटज्ञातीयमं० ठाकुरसी-भार्याबेनबाकू-सुतकेहला-भार्याकर्मादेआत्मश्रेयोर्थम् ।

[ 760 ] अन्तः— स्वस्तिसंवत् १४ आषाढादि ९९ कार्त्तिकवद्व... ...
सं० १५१६ वर्षे आषाढ सुदि ५ दिने वा० महिमराजगणीनामुपदेशेन सं० माणिकभार्यया जीवणीश्राविकया तुष्कादमो वि(? लिखापित) शास्त्रमिदं श्रीमंडपदुर्गे ।

[ 761 ] अन्तः— ॐ नमः पंचपरमेष्ठिभ्यः ।

देवः श्रीनाभिसूनुर्जनयतु स शिवान्यंशदेशे यदीये
खेलन्ती कुन्तलाली विलसदलिकुलप्रोज्ज्वला शालते स्म ।
संजाते संयमश्रीपरिणयनविधौ मांगलिको त्रिलोकी-
लक्ष्म्यां दूर्वाङ्कुराणां ततिरिव पतितो ध्वस्तहस्तद्वयाग्रात् ॥१॥

विश्वाहंकारमर्द्दी समितिकृतरतिश्चक्रचापाङ्कपाणिः
प्रोद्यद्गीर्वाणशाला व्यपहृतविषमाक्षारिदोदण्डकण्डूः ।
भक्तिप्राग्भारनम्रक्षितिपतिपटली मौलिकोटीरकोटी
शाणाकोणाग्रलेखोल्लिखितनखशिखः पातु वीरस्त्रिलोकीम् ॥२॥

नित्यं यत्प्रणिपातसंभ्रमभृतां पादाब्जपीठस्थल-
न्यासोल्लासिकिणावलीव्यतिकराद् भालेषु भव्यात्मनाम् ।
एतेऽनन्तमहोमहोदयपदे योग्या इति प्रीतितः
पुण्यद्धर्या किल वर्द्धितानि तिलकान्यव्याज्जिनौघः स वः ॥३॥

यत्कान्तिप्रसरेण विश्वधवलीकारश्रिया सर्वतः
सद्ध्यानं परिपच्यतेऽधिमनसं शुक्लं तदक्लेशतः ।
येनोत्सर्प्पति सर्ववाङ्मयगतं ज्ञानं परं तत्क्षणात्
सोऽस्माकं श्रुतदेवता रचयताद् विघ्नोपशान्तिक्रियाम् ॥४॥

आस्तेऽनन्यजना मनस्यनुकलं स्वस्वामिभक्तिस्ततो
वासं यस्य चकार पाणिकमले सा केवलश्रीर्ध्रुवम् ।
नैवं चेद् विललास तत् कथमियं सर्वत्र तत्र क्षणात्
न्यस्तो यत्र भवेदयं स भगवान् श्रीगौतमो नन्दतात् ॥५॥

गवामीशे यत्र प्रवचनधुरां धर्मधवले
स्फुरद्व्याख्यानादप्रतिहृतसमस्तेतरवृषे ।
समारोप्यात्मीयां त्रिभुवनपतिर्निर्वृतिमगाद्
भवारण्यान्निस्तारयतु स सुधर्म्माभिधगुरुः ॥६॥

तत्त्वार्थरत्नौघविलोकनार्थं सिद्धान्तसौधान्तरहस्तदीयाः ।
निर्युक्तयो येन कृताः कृतार्थस्तनोतु भद्राणि स भद्रबाहुः ॥७॥

तस्यावश्यकनिर्युक्तिगवो बृहद्वृत्तिभाजनेऽर्थपयः ।
प्रगुणीकरोमि सरसं रसलोलुपलोकतुष्टिकृते ॥८॥

पर्व क्व द्वादशांगीभृद् भद्रबाहुगुरोर्गिरः ।
मुग्धधीर्बालिशः क्वाहं पदमात्रेऽप्यशक्तिमान् ॥९॥

तद् यदावश्यकमहं विवरीतुं मतिं व्यधाम् ।
गङ्गां तरीतुमारब्धस्तद् दोष्णैकेन कृष्णवत् ॥१०॥

महाशास्त्रस्य चामुष्य महाकविविनिर्मिते ।
गम्भीरार्थे महत्यौ स्तश्चूर्णिवृत्तिश्च यद्यपि ॥११॥

तथाप्यत्यल्पधीहेतोरल्पधीरप्यहं पुनः ।
रचयिष्याम्यमूं वृत्तिमुत्तमार्थां लघीयसीम् ॥१२॥

ततोऽत्र यदहं कुर्वे तत् सर्वं गुरुभक्तिजम् ।
जानन्तु माऽवजानन्तु सन्तः सुमनसो मयि ॥१३॥

तथाहि — संजातेऽवसरेऽधुना श्रुतसुधाधाराकिरो मद्गिरः
सद्यः पल्लवयन्तु भव्यहृदयारामे प्रबोधद्रुमम् ।
लब्धात्यद्भुतवासनाद्सुमनोभावं सदालिप्रियं
यस्तैस्तैः फलितः फलैरविरलैः स्वर्गापवर्गादिभिः ॥१४॥

इहायं शास्त्रवेधसां सुमेधसां शास्त्रसंदर्भारम्भसंरम्भविधिः यथा सर्वाण्यपि शास्त्राणि मङ्गलाभिधेयसंबन्धप्रयोजनप्रतिपादनपूर्वाण्येव प्ररूप्यन्ते ।

अन्तः— इति श्रीतिलकाचार्यविरचितायामावश्यकलघुवृत्तौ प्रत्याख्यानाध्ययनं समाप्तम् । अत्र ग्रन्थाग्रम् ६९८ । तत्समाप्तौ समाप्तेयमावश्यकलघुवृत्तिः । ग्रन्थ-सर्वाग्रम् १२३२५ ।

तीर्थे वीरविभोः सुधर्मगणभृत्संतानलब्धोन्नति-
श्चारित्रोज्ज्वलचान्द्रगच्छजलधिप्रोल्लासशीतद्युतिः ।
साहित्यागम-तर्क-लक्षण-महाविद्यापगासागरः
श्रीचन्द्रप्रभसूरिरद्भुतमतिर्वादीभसिंहोऽभवत् ॥१॥

तत्पट्टलक्ष्मीश्रवणावतंसाः श्रीधर्मघोषप्रभवो बभूवुः ।
यत्पादपद्मे कलहंसलीलां दधौ नृपः श्रीजयसिंहदेवः ॥२॥

तत्पट्टोदयशैलशृङ्गमभजत् तेजस्विचूडामणिः
श्रीचक्रेश्वरसूरिरित्यभिधया कोऽप्यत्र भानुर्नवः ।
संप्राप्ताभ्युदयः सदैव तमसा नो जातु विच्छायितः
नैवोच्चण्डरुचिः कदाचिदपि न प्राप्तापरागस्ततः ॥३॥

विललास स्वैरं तत्पट्टप्रासादचन्द्रशालायाम् ।
श्रीमान् शिवप्रभगुरुः संयमकमला[कृता]सक्तिः ॥४॥

श्रीशिवप्रभसूरीणां तेषां शिष्योऽस्मि मन्दधीः ।
नाम्ना श्रीतिलकाचार्यः श्रुताराधनगृद्धिभाक् ॥५॥

एतां वृत्तिं लघुमविषमां सोऽहमावश्यकीयां
तत्पादाब्जस्मरणमहसा मुग्धधीरप्यकार्षम् ।

तथत्किञ्चिद् रभसवशतो दृष्टमस्यामशुद्धं ।
तत् संशोध्य मयि कृतकृपैः सूरिभिस्तत्त्वविद्भिः ॥६॥
वृत्तिं रचयता चैतां सुकृतं यन्मयार्जितम् ।
भवे भवेहं तेन स्यां श्रुताराधनतत्परः ॥७॥
शतद्वादशकेब्दानां गते विक्रमभूभुजः ।
संवत्सरे षण्णवतौ(१२९६) वृत्तिरेषा विनिर्ममे ॥८॥
शिष्या नः शस्यचारित्राः सर्वशास्त्राब्धिपारगा. ।
अस्यां साहाय्यक चक्रुः श्रीपद्मप्रभसूरयः ॥९॥
शिष्योऽस्माकमिमां वृत्तिमखिन्नः शास्त्रतत्त्ववित् ।
अलिखत् प्रथमादर्शे यशस्तिलकपण्डितः ॥१०॥
स सपादत्रिशत्यस्यां श्लोकद्विषट्सहस्त्रिका ।
प्रत्यक्षरेण संख्याता इति निश्चितवानहम् ॥११॥
यावद् विजयते तीर्थं श्रीमद्वीरजिनेशितुः ।
तावदेषा मरालीव खेलतात् कृतिमानसे ॥१२॥
श्रीसंघस्य कल्याणमस्तु शुभं भवतु ।

[763] **आदिः**— ॐ नमः श्रीपञ्चपरमेष्ठिभ्यः ।
श्रीवीरजिनवरेन्द्रं वन्दित्वा चैत्यवन्दनादीनि ।
अल्परुचिसत्त्वहेतोर्विवरिष्ये गमनिकामात्रम् ॥१॥
इह चैत्यवन्दनादीनां विवृतिरारभ्यते ।

**अन्तः**— इति श्रीतिलकाचार्यविरचिता साधुप्रतिक्रमणसूत्रवृत्तिः समाप्ता ।
अधिकं षण्णवत्यात्र शतं द्वैतमनुष्टुभाम् ।
प्रत्यक्षरेण संख्याय ग्रन्थमानं विनिश्चितम् ॥१॥

[765] **अन्तः**— एवमित्यादि । एव प्रतिक्रमणसूत्रभणितप्रकारेणालोच्य निन्दित्वा गर्हित्वा जुगुप्सित्वा त्रिविधेन प्रतिक्रान्तः चतुर्विंशतिजिनानि वन्दे नमस्कारोसौ... ।
श्रीचन्द्रसूरिगुरुप्रतिक्रमणसूत्रलघुवृत्तिः समर्थयांचक्रे ।
संवत् १५२९श्री......सूरिपट्टे भ० जिनहर्षसूरीणामुपदेशेन सं० साहिराजेन ।

[767] **आदिः**— ॐ नमः श्रीजिनप्रवचनाय । प्रारभ्यते श्रीआवश्यकानुयो[गो]ऽत्र मंगलादीनि वाच्यानि ।

**अन्तः**— इति [श्री]मदावश्यकावचूरिः समाप्ता ।
श्रीमत्तपागणनभोङ्गणभास्कराभश्रीदेवसुन्दरयुगोत्तमपादुकानाम् ।
खाऽब्धि-युगेन्दु(१४४०)मितेऽब्देऽवचूर्णिरावश्यकस्य जयिनीयम् ।
शिष्यैर्जिनागमसुधाम्बुधिलीनचित्ते श्रीज्ञानसागरगुरूत्तमनामधेयैः ॥१॥
विदधे वृहद्विवरणात् श्रुतभक्त्या स्व-परहितहेतोः ॥२॥
इति श्रीज्ञानसागरसूरिविरचिता श्रीमदावश्यकावचूर्णिप्रान्ते प्रशस्तिर्लेखनीया ।
संवत् १६१९ वर्षे चैत्रशुदि ७ बुधे ।

[ 768 ] **अन्तः**— इत्याचार्यश्रीहरिभद्रसूरिकृतवृत्त्यनुसारदो(तो) भट्टारकप्रभुश्रीज्ञानसागरसूरिगणधरै-
रियमवचूरि[:] कृता, ततो(दु)परि लिखितास्ति ॥

संवत् १५०६ वर्षे ज्येष्ठशुदि १५ भोमे पुस्तिका लिखापिता चिरं नन्द्यात् ।

[ 770 ] **आदिः**— नमः श्रीवर्द्धमानाय । श्रीमद्गच्छेशश्रीरत्नसिंहसूरिगुरुभ्यो नमः ॥

श्रीआवश्यसूत्रनिर्युक्तिविषयाः प्रायो दुर्गमपदार्थाः कथामात्रं निर्युक्त्युदाहृतं च लिख्यते । इह श्रीदेववाचकेपत्यरनामा देवर्द्धिगणिज्ञानपञ्चकरूपं नन्दिग्रन्थ-वक्तुकामो मङ्गलार्थं पूर्वमावलिकां अभिधित्सुः सामान्यतोऽर्हतः स्तुतिमाह ।

**अन्तः**— इति प्रत्याख्याननिर्युक्तिः समाप्ता ।

रमणीयमनोज्ञपदा सुरसार्थविराजिता त्रिपथगेव ।
वियदिव च विचारिश्रीरावश्यकदीपिका जयति ॥

[ 771 ] **अन्तः**— (अन्यहस्तेन लिखितमिदम्--)

पं० ज्ञानरगणिशिष्य-पं० आणन्दविजयगणि-शिष्यहर्षविमलगणीनी प्रतिः ।

[ 774 ] **आदिः**— श्रेयांसि श्रीमहावीरः स श्रीसंघस्य यच्छतात् ।
यस्याज्ञा कल्पवल्लीव मनोवाञ्छितदायिनी ॥१॥

श्रीवर्द्धमानजिनशासनराज्यनेता विश्वत्रयाद्भुतचरित्रयुगप्रधानः ।
श्रीसोमसुन्दरगुरुर्गुरुचक्रवर्त्ती भूयादमेयमहिमा मम सुप्रसन्नः ॥२॥

तत्पट्टनायकाः श्रीमुनिसुन्दरसूरयो जयन्त्यधुना ।
जयचन्द्रसूरि-जिनकीर्त्तिसूरिपरिवारपरिकरिताः ॥३॥
स्वान्ययोरुपकाराय लिख्यते लेशतो मया ।
षडावश्यकसूत्राणां व्याख्या बालावबोधिनी ॥४॥

पहिलउं सकल मंगलीकनउं मूल, श्रीजिनशासनउं सार, इग्यार अग चउदपूर्वनउ उद्धार, सदैव शाश्वतउ । श्रीपंचपरमेष्ठि महामन्त्र नउकार नमो अरिहंताणं०—

[ 775 ] **आदिः**— शिवाय श्रीमहावीरः सुरासुरनमस्कृतः ।
चतुर्विधस्य संघस्य भवतात् गौतमान्वितः ॥१॥
प्रवरे खरतरगच्छे श्रीमज्जिनसूरयोऽभवन् ।
तत्पट्टे विजयन्ते श्रीमज्जिनचन्द्रसूरयो गुरवः ॥२॥
षडावश्यकसूत्राणां तेषामादेशतो मया ।
बालावबोधः संक्षेपात् लिख्यते प्रकटार्थवान् ॥३॥

**अन्तः**— इति श्रावकप्रतिक्रमणबालावबोधः ।

सं० १५७५ वर्षे श्रावणसुदि ४ श्रीखरतरगच्छनायकश्रीजिनराजसूरि-पट्टालङ्कारश्रीजिनभद्रसूरि-पट्टपूर्वाचलचूलिकाशृङ्गारदिवाकराणां विजयवतां सुविहित-सूरिशिरोमणीनां श्रीपूज्यश्रीजिनचन्द्रसूरिराजानामादेशेन श्रीमंडपमहादुर्गे श्रीसंघा-भ्यर्थनया वाचनाचार्यरत्नमूर्त्तिगणि-शिष्यवा० मेरुसुन्दरगणिना श्रीषडावश्यक-वार्त्ताबालावबोधः परोपकाराय श्रीतरुणप्रभाचार्यबालावबोधानुसारेण कृतोयम् ।

बहुश्रुतिः[तभिः] प्रसत्ति विधाय यदुत्सूत्रं भवति तत् शोधनीयम् । सर्वैरपि वाच्यमानं चिरं नन्दतात् । ग्रन्थाग्रम् १५०० ।

[ 776 ] **मू०आदिः**— ऐं नमः । नमो अरिहंताणं, नमो सिद्धाणं० ... ... ...

**बा०आदिः**-- एहनुं अर्थ । पहिलुं सकल मङ्गलीकनुं मूल श्रीजिनशासननुं सार अग्यार अङ्ग चउदपूर्वनुं सार... ... . .

**बा०अन्तः**-- श्रीषडावश्यकबालावबोध संपूर्ण हुउ । ... ... ...

इति श्रीतपागच्छनायकश्रीसोमसुन्दरसूरि-श्रीमुनिसुन्दरसूरिपदकमलसंसेवित-शिष्यमहोपाध्याय-श्रीहेमहंसगणिनाऽभ्यर्थनाकृतोयं षडावश्यकबालावबोधः समाप्तः ।

संवत् १६६५ वर्षे मार्गशीर्ष सुदि १४ शनौ लिखितम् ।

[ 777 ] **अन्तः**— संवत् १७२८ वर्षे फागुणसुदि २ दिने सोमे श्रीअहमंदनगरमध्ये वृद्धतपापक्षे भ० श्री ५ श्रीकल्याणरत्नसूरीणां शिष्यपं०श्री ५ श्रीसुमतिरत्न-तत्शिष्यमहोपाध्याय-श्रीदेवविजयगणीनां गुरुप्रसादात् साध्वीश्री ५ श्रीहीरश्रीशिष्यणीदानश्रीलिखितम्, आत्मपठनार्थम् ।

[ 778 ] **अन्तः**— प्रत्याख्यानबालावबोधः ।

चउथउ अधिकार संपूर्ण हुउ . श्रीषडावश्यकबालावबोधः संपूर्णः । एह मांहि च्यारि अधिकारः—पहिलइ अधिकारी देववन्दन१, बीजइ गुरुवन्दन२, त्रीजइ पडिकमणुं३, चउथइ पच्चक्खाण४ ।

वर्षे भूमि-नभः-शरावनि(१५०१)मिते शुद्धक्रियासादरः
श्राद्धाभ्यर्थितसोमसुन्दरगुरोरादेशतो निर्मिता ।
तच्छिष्याणुजहेमहंसगणिना सेयं षडावश्यक-
व्याख्या पुष्यतु दक्षतां जिनमते बालावबोधाभिधा ॥१॥

इति श्रीतपागच्छनायकसकलमुविहितपुरन्दरश्रीसोमसुन्दरसूरि-श्रीमुनिसुन्दरसूरि-श्रीजयचन्द्रसूरिपदकमलसंसेविना शिष्यश्रीहेमहंसगणिना श्राद्धवराभ्यर्थनया कृतोऽयं षडावश्यकबालावबोध आचन्द्रार्कं नन्द्यात् ।

षडावश्यकबालावबोधः समाप्तमि(प्त इ)ति ।

संवत् १६८१ वर्षे ज्येष्ठमासे शुक्लपक्षे द्विती[या]यां तिथौ शुक्रवासरे श्रीआगमगच्छे पूज्यभट्टारकश्री ४ संयमरत्नसूरीश्वराणां शिष्यपं०श्रीजयरत्न-तत्शिष्यपं०-श्रीदेवरत्न-तत्शिष्यऋषि०वरसिंघलिखितं, श्रीछवर्कूपल्लीग्रामे लिषितमिति । ग्रन्थाग्रम् २६४१ ।

[ 779 ] **अन्तः**— इति श्रीश्रावकप्रतिक्रमणसूत्रबालावबोधः । षडावश्यकबालावबोधः संपूर्णः समाप्तम् ।

संवत् १७३८ वर्षे कार्तिकवदि ५ दिने भृगुवासरे वाचनाचार्यश्रीराजहर्षजीगणि-तत्शिष्यराजलाभगणिलिखितं श्रीथणाडमध्ये ।

यादृशं० ॥१॥ श्लोकसंख्याग्रन्थाग्रम् १५०२ लिख्यमानं वाच्यमानं चिरं जीयात् ।

[ 780 ] **मू०अन्तः**— वर्षे चन्द्र-जनार्दनप्रियतमापुत्रांशुगर्षि-क्षमा(१७५१)
मेये श्रीविजयादिमामगणभृत् प्राज्ये प्रदीपोत्सवे ।

प्राज्ञश्रीसुयशान्वितस्य विजयस्यामुं षडावश्यका-
र्थों योगं कृतवान् जिनादिविजयोऽन्तेवासिमुख्यः सुधीः ॥१॥
सम्यक्त्वशुद्धव्रतधारिकाया रूपाभिधाया प्रचुराग्रहाच्च ।
आद्यां प्रतिं दर्शननामधेयः शिष्यो लिलेखार्कपुरे मुदितो ॥२॥
इति षडावश्यकबालावबोधः समाप्तः ।
संवत् १८९५ रा मिति आसाढ सुदि ९ आदित्यवारे ।

**स्त०अन्तः**— हिवें षडावश्यक किसेंस किणें कीधो किणरे वास्तें ते लिष छै । संवत्सरनें विषें चन्द्र १, जनार्दन क० श्रीकृष्ण तेहनी प्रियतमा स्त्री रुषमणी तेहनो पुत्र प्रद्युम्न, बीजू कामदेव तेहनो अंशुक बाण एतले पांच, ऋषि क० सात, क्षमा क० पृथिवी ते एक १, तत्प्रमाण एटलें संवत् १७५१ वरसें श्रीविजयमा-[न]सूरिनूं राज्य तलें दीवालीनें दिवसें पण्डित श्रीयशविजयमो शिष्य ए षडावश्यक तेहनो अर्थना उद्यम प्रतें कर्यो, जिनविजय नामा अंतेवासी वृद्ध शिष्यें ॥१॥ शुद्ध सम्यक्त्व व्रतधारिका श्राविका रूपां एहवे नामें तेहनां घणे घणे कहेवेथी ।

इति श्रीषडावश्यक नामें पडिकमणो बाला[व]बोध संपूर्ण थयो ॥
अन्यदीयहस्तेन लिखितमिदम्–)
॥ साध्वी श्रीसिणगारसिरीजीपठनार्थं पनीबाईउपदेशात् श्रीसंघेन लिखापितं श्रीबीकानेरमध्ये ।

[ 783 ] **सूचनम्**— आद्यन्तसंदर्भार्थं द्रष्टव्यम् नं० 44 ।

[ 784 ] **अन्तः** — इति श्रीख(ष)डावश्यकबालावबोधः समाप्तः ।
इन्द्र-इन्दु-कलामिते(१६६४)संवत्सरे पोषमासे राकातिथ्यां र[वौ] वासरेऽलेखि श्रीमद्राजनगरे लिखितमिदं पुस्तकम् ग्र०९०० ।

[ 787 ] **अन्तः**— संवत १८७० वर्षे आषाढादिचैत्रवदि ९ तिथौ गुरुवासरे श्रीईडरगढे लि० गणिकुशलविजय(येन) स्ववाचनाय परार्थं च श्रीमत्तपागच्छाधिराजभ० श्रीविजयजिनेन्द्रसूरिराज्ये कल्याणमस्तु सर्वेषां सज्जनानां लेषक-पाठकयो-राचन्द्रार्कं चिरं जीयात् ।

अज्ञानाच्च मतिभ्रंशाद् यत् कूटं लिखितं मया ।
मिथ्या मे दुष्कृतं तस्य मनो-वाक्काय-शुद्धितः ॥१॥
यावज्जिनवरसमयो यावद्रविहिमकरौ सुरगिरिश्च ।
ग्रन्थस्तावन्नन्दतु विबुधवरैर्वाच्यमानोयम् ॥२॥ इति ॥

[ 788 ] **अन्तः**—प०श्री१०८श्रीहु(?)स्तविजयजी तत्सी(शि)ष्यवाचनार्थम् ।
संवत् १८४९ फागणविदि ३० अम्मावास्यादिने ग्रामविद्युत्पुरे चोमासुं रह्या हता तारे लिख्यो ।

[ 789 ] **स्त०अन्तः** — अरिहंत तेह ज माहरे देव तरणतारण छें अनें जावजीव सुसाधु ते चारित्रिया माहरें गुरु अने जिननो प्रकास्यो जीवदया मूल धर्म इसिउं सम्यक्त्व में लीधुं ते प्रहिउं निश्चलमनं करि ।

इति संथारापोरसीसूत्रं संपूर्णम् । इति श्रीपडिकमणु षडावश्यकं समाप्तम् ।। पठनार्थं चीरं जीयात् ग्रन्थाग्रन्थ १४०० छें । लखावित बाई जासुपठनार्थं वा पर्मा-(परमा)र्थम् ।

[ 798 ] अन्तः— इति यतिप्रतिक्रमणसूत्रं समाप्तमिति ।।
श्रीपूज्यदेवरत्नसूरि–तत्स(शि)ष्यश्रीपण्डितसुमतिरत्नगणी-तत्स०(शी०)-श्रीऋ०राजसुं[द]र–तत्० लब्धिसुन्दरपठनार्थं लक्षी(लिखि)तम् ।

[ 800 ] अन्तः— संवत् १५६६ वर्षे कार्त्तिकवदि ४ दिने बुधवारे श्रीपूर्णिमा[प]क्षे प्र०श्री० श्रीभुवनप्रभसूरि–तत्शिष्यानुशिष्यैः(ष्येण) मुनिराजसुन्दरेण लेखितः ।

[ 802 ] अन्तः— समाप्ता चेयं शास्त्रानुसारिणी पक्षप्रतिक्रमणवृत्तिरिति ॥

चन्द्रकुलाम्बरशशिनो भव्याम्बुजबोधनैकदिनपतयः ।
गुणगणरत्नसमुद्रा आसन् श्रीवीरगणिमिश्राः ॥१॥

शुद्धध्यानजलापनीतकलिलाः सज्ज्ञानदीपालयाः
निःसंगव्रतभारधारणरतास्तीव्रे तपस्युद्यताः ।
ग्रीष्मेष्वातपवेदनां गुरुतरां जेतुं सदोपस्थिताः
हेमन्तेषु च शार्वरं हिमभरं सोढुं सदा निश्चलाः ॥२॥

श्रीचन्द्रसूरिनामा तेषां शिष्यो बभूव गुणराशिः ।
आनन्दितभव्यजनः शंसितसंशुद्धसिद्धान्तः ॥३॥

कलिकालदुर्लभानां गुणरत्नानां निधानमनवद्यम् ।
समयावदातबुद्धिस्तथा परो देवचन्द्रगणिः ॥४॥

श्रीचन्द्रनाम्नः सूरेः पादपङ्कजसेविना ।
दृब्धेयं प्रस्तुता वृत्तिः श्रीयशोदेवसूरिणा ॥५॥

गम्भीरमेतदर्थं न दोहने शक्तिरस्ति मम दक्षा ।
नापीह संप्रदायः सम्यग् बहवश्च पाठगमाः ॥६॥

शास्त्रानुसारात् सुखबोधपाठैरात्मीयशक्त्या विवृतं तथापि ।
यच्चेह किञ्चिद् वितथं निबद्धं तत्रास्तु मिथ्या मम दुःकृतं हि ॥७॥

अणहिल्लपाटकनगरे सौवर्णिकनेमिचन्द्रसत्कायाम् ।
वरपौषधशालायां राज्ये जयसिंहभूपस्य ॥८॥

विशारदैः सूरिवरैर्विहारिभिर्विशोधिता यत्नपरायणैरियम् ।
तथापि यन्न्यू[न]मुताऽधिकं पदं तच्छोधनीयं कुशलैः कृपापरैः ॥९॥

शुभाशयवशाच्चेह यन्मया सुकृत कृतम् ।
तेन भूयान्ममाभ्यासः सर्वदैव जिनागमे ॥१०॥

एकादशशतैरधिकैरसो(शी)त्या विक्रमाद् गतैः (सं०११८०) ।
द्वे सहस्रे शतैरधिके सप्तभिर्ग्रन्थमानः ॥ ११॥
ग्रन्थाग्रम् २७०० ।

पज्जुसणे चउमासे पक्खियपव्वट्ठमीसु नायव्वा ।
ताओ तिहिओ जासिं उदयओ सूरो न अन्नाओ ॥१॥
दशाश्रुतस्कन्धभाष्ये ।

संवत् १४८३ वर्षे सिन्धुमण्डलवास्तव्यसा०खेरू-पुत्रस०सोमाकेन सा० अभयचन्द्र-रामचन्द्रप्रमुखपुत्र-पौत्रादियुतेन श्रीखरतरगच्छे श्रीजिनराजसूरि-पट्टे श्रीजिनभद्रसूरिसुगुरूणामुपदेशेन श्रीपाक्षिकवृत्तिर्लिखापिता वाच्यमाना चिरं नन्द्यात् । भद्रमस्तु श्रीसंघस्य ।

आगमिकश्रीअमरसिंहसूरिभिरलेख्यत ।

[ 804 ] **अव०आदिः**— श्रीगुरुभ्यो नमः ॥
शुभयोगेऽन्योऽशुभयोगान्तरं क्रान्तस्य शुभेऽथैव प्रतिकूलं०—

**अव०अन्तः**— इति जिनप्रभसूरिकृतवृत्तेरवचूरिरियम् । संवत् १६७० वर्षे काती(र्तिक)मासे शुक्लपक्षे चतुर्थीदिने पण्डितग्रहगणनभोमणिपण्डितश्रीउदयरुचिगणि-शिष्य-मुनिधर्मरुचिनाऽलेखि विक्रमपु[रे] । ग्रन्थाग्रम् ४५१ ।

[ 807 ] **स्त०आदिः**— ऐं नत्वा पार्श्वनाथस्य पादपद्ममभीष्टदम् ।
यतिप्रतिक्रमणसूत्रस्यार्थः कश्चिद् वितन्यते ॥१॥
प्राकृतं बालबोधं यत् तल्लोके हृदयसमम् ।
अल्पबुद्धिप्रबोधाय पूर्वग्रन्थानुसारतः ॥२॥

**स्त०अन्तः**— इति श्रीयतिप्रतिक्रमणसूत्रटबार्थः संपूर्णम्(र्णः) । संवति १९०९ रा मिती कार्तिकशुक्ल १४ चतुर्दस्यां(श्यां) तिथौ ली(लि)पीकृतोय नागोरनगरे ।

**मू०अन्तः**— इति श्रीयतिप्रतिक्रमणसूत्रं संपूर्णम् । संव्वति १९०९ रा मिति काति(र्तिक) सुद १४ ॥

[ 811 ] **अन्तः**— इति यतिप्रतिक्रमणसूत्रं संपूर्णम् ।
संवत् ओगणीसना मागसीर सुदि ६ लिखितं द्ववे वजेराम । अनोपसरीनी प्रत छे ॥श्री॥

[ 817 ] **अन्तः**— दासानुदासा इव सर्वदेवा यदीयपादाब्जतले लुठन्ति ।
मरुस्थलीकल्पतरुः स जीयात् युगप्रधानो जिनदत्तसूरिः ॥
भणसाली विउजा-भार्याभीमीसुश्राविकापठनार्थम् ।

[ 826 ] **अन्तः**— इति श्रीतपा० । श्राद्धप्रतिक्रमणसूत्रवृत्तौ शेषाधिकारः पञ्चमः । ग्रन्थाग्रम् ४११, समाप्ता चेयमर्थदीपिकानाम्नी श्रावकप्रतिक्रमणसूत्रटीका । सर्वग्रंथाग्रम् ६६४४ ॥

संवत् मुनि-रस-तिथि(१५६७)संख्ये वर्षे पोषमासे प्रतिपदातिथौ आदित्यवासरे प्रति० वृत्तिर्लिलिखे । ११८३ वर्षे श्रीविजयसिंहसूरि-श्रीजिनदेवसूरिकृते चूर्णिभाष्ये अपि ॥

[ 827 ] **आदिः**— प्रणिधाय श्रीवीरं स्वल्परुचीनां कृते समासेन ।
विवरणमिदं करिष्ये गृहिप्रतिक्रमणसूत्रस्य ॥१॥

**अन्तः**— प्रतिक्रमणविवरणं समाप्तम् ॥

इति श्रीतिलकाचार्यविरचिता श्लोकशतद्वयप्रमाणा श्रावकप्रतिक्रमणसूत्र-लघुवृत्तिः समाप्ता ॥ संवत् १५[०]६ वर्षे ॥

[ 830 ] **अन्तः**— संवत् १५०१ वर्षे वैशाखप्रथम १ प्रतिपदादिने श्रीनंदुरबारिपुरे लिखितम् ॥ श्रीनंदुरबारिपुरे श्रीदिग्यज्ञातीयपं०चक्रपाणिसुतधनेश्वर(श्वरेण) लेखकानन्दाद्यः(?) श्राद्धप्रतिक्रमणसूत्रं लिखितम् । श्रीसोमसुन्दरसूरीणां चिरं चिरकालं भवति ॥

[ 832 ] **अन्तः**— संवत् १८३३ वर्षे द्वितीयभाद्रवावदि ११ रवौ श्रीबृहल्लुंकागच्छेशश्रीपूज्य-जीश्री ६ श्रीजयराजजी–तत्शिष्यऋ०जिनदत्तेन लिपं(पी)कृतम् । ग्रामपालीनयर-मध्ये श्रीजीसाहिब चोमासो कीधो, तदा ग्रन्थ लिख्यौ छै । वंदारुवृत्ति-ग्रन्थः संपूर्णः श्रयः ॥

[ 836 ] **अन्तः**— संवत् १५, आषाढादि ७९, वर्षे श्रावणसुदि ७ भौमवासरे स्वातिनक्षत्रे श्रीमत्श्रीखरतरगच्छे श्रीजिनहर्षसूरि-पट्टालङ्कारश्रीजिनचन्द्रसूरिविजयराज्ये श्रीजिनकीर्त्तिउपाध्यायानां शिष्यश्रीहर्षकुंजरोपाध्यायवा०ज्ञानकुंजरगणिनां शिष्य-पं०नयसमुद्रगणिनां शिष्येन गुणलाभेन लिखितम् ॥

[ 839 ] **अन्तः**— संवत् १७३० वर्षे चैत्रवदि ७ शुक्रे जीर्णदुर्गे लिखिता । उ० श्रीजय-विजयगणिभिः । पं० उदयविजयनई आपि छें ।

[ 849 ] **मू०अन्तः**— इति श्रीश्रावकप्रतिक्रमणसूत्रं समाप्तम् ।
संवत् १६८४ वर्षे द्वितीयश्रावणवदिद्वितीयादिने ।
(अन्यदीयहस्तेन लिखितम्–) पंडितफतेचन्दरा पाना छे ॥
(हरतालप्रयोगेऽपि पुष्पिकाक्षराणि निम्नप्रकारेण वाच्यन्ते–)

वाचनाचार्यवर्य्यधुर्य्यश्री ५ श्रीसमयप्रमोदगणिवराणां शिष्येण पं०लब्धि-शेखरगणिना पं०ज्ञानविमलयुतेन प्रतिक्रमणसूत्रं लिपीकृतम् । श्रीडिंडुआणा-वास्तव्यसुश्राविका पुन्यप्रभाविका मखचूलावाचनार्थं वाच्यमानो चिरं नन्दतु श्रीदेवगुरुप्रसादात् श्रीरस्तु बुधवारे ॥

[ 850 ] **अन्तः**— अहमदावादी लाषा पटलनी पोलि लेखितम्, वीसावालज्ञातीयमन्त्र-श्रीथावर-सुतर्वविदासविप्रः । सं० १५९६ आषाढवदि १४ भौमे ।

**स्त०अन्तः**— इति श्रीषडावश्यकसूत्रअक्षरार्थः संपूर्ण । ग्रन्थाग्रम ६५६ श्लोकः । उसवालज्ञातीयमाहाजावडलेषावितधर्मपुण्यअर्थे ।

[ 851 ] **अन्तः**— पं०श्रीजीवराजगणि–श्रीआणन्दकुशल–शिष्यपंडितश्रीरत्नकुशलगणि शिष्य-दानकुशल–मु०राजकुशललिखितम् । उ०वरजाग[णि]पठ[नार्थम्] ।

[ 852 ] **स्त० अन्तः**— सं० १६७९ वर्षे चैत्रमासि अजूआलि पक्षवाडि पडिवाइ तिथि ३ । शुक्रवारि चेला पचाइण लिषीउ ।

(पश्चात्कालीनलिपिः— ) चेलातेजापटनार्थम् ।

[ 854 ] **अन्तः**— सं० १५४८ वर्षे माघवदि १३ शुक्रवारे सुषालयपुरे श्रीवृद्धतपापक्षे प्रभुभट्टारककलिकालश्रीगौतमावतारषट्त्रिंशत्सूरि[ ? गुण ]विराजमानगच्छाधीशश्री-पूज्यश्री ५ जिनरत्नसूरिगुरु–तत्पट्टे श्रीजिनसाधुसूरि-तत्शिष्येणालेखि । श्रीश्रीमाली-

ज्ञातीयसंघवीसहिजा-भार्याश्राविकामाउ तत्सुता सुश्राविका धर्म्मकर्मरता पुण्यप्रभाविका शोलालङ्कारधारिणी श्राविका रजूपठनार्थम् ।

[ 855 ] **अन्तः**— इति श्रीश्राद्धप्रतिक्रमणसूत्रं संपूर्णम् ।
संवत् १८०२ वर्षे आषाढवदि ११ वार आदित्य **औरंगाबादनगरे** । सा० **माणकचन्द नाथालपावितम्** ।

[ 857 ] **स्त० अन्तः**— ए षडावश्यकटबो अर्थ गांधी **मनजीनि** उपदेशइं करीनि साह **ताराचन्दे** कर्यो छे ॥ ग्रन्थाग्रम् २३००० छै ।

सं० १७९४ वर्षे पोषमासे कृष्णपक्षे चतुर्थी गुरौ रात्रौ संपूर्णमगमत् ।

[ 859 ] **सूचनम्** –पुष्पिका नं० ८५७ वद् वेदितव्या ।

[ 863 ] **अन्तः**— **ऊकेशवंशोस्ति** सुमेरुतुल्य सुपर्वमालाप्रतिभासमानः ।
अनल्पकल्पद्रुमकल्पपुंभिः श्रितोप्यहो ! चित्रमपारिजातः ॥१॥
**वरडानाम** शाखायां श्रावकोऽत्र महर्द्धिकः ।
**धीमसिंह** इति नाम्ना संजातो धार्मिकाग्रणीः ॥२॥
तस्यांगजः श्री गुरुदेवशक्ति[सत्]शुक्ति[पु] मौक्तिकमण्डलाभः ।
श्रीधर्मकार्येषु कृतावधानो वैशिष्ट्यनिष्ठो हरिपालसाधुः ॥३॥
शीलादिगुणसंयुक्ता तस्याऽभूत् सहचारिणी ।
**चेतीति** नामतोऽगण्यपुण्यनैपुण्यमालिनी ॥४॥
तयोर्नन्दनोऽशेषलोकेषु मान्यः सदाभीष्टधर्मो जयत्याशराजः ।
यकः शिश्रिये पादमूले गुरूणां महाभावतो द्वादशापि व्रतानि ॥५॥
राजहंसोव तस्यास्ति पक्षद्वितयनिर्मला ।
रूपलावण्यसंपन्नाल्हाणदेवीति गेहिनी ॥६॥
तयोः पुत्रा प्रवर्त्तन्ते सप्तैते कुलमण्डनाः ।
**पाल्हाकः** प्रथमस्तत्र **जींदाकश्च** द्वितीयकः ॥७॥
**देल्हाकस्तृतीयो** जातो **ऊंटाकश्च** [च]तुर्थकः ।
पञ्चमो **मण्डलीकाख्यः** षष्ठो **मालाह्वयस्तथा** ॥८॥
**महिपतिः** सप्तमोऽपि रतेः पतिरिवाङ्गवान् ।
**देल्हाकस्य** च पुत्रोस्ति **कीव्हाख्यो** गुणोज्ज्वलः ॥९॥
अनेन परिवारेण भूषितो जिनशासने ।
कुरुते धर्मकार्येषु यथाशक्ति समुद्यमम् ॥१०॥

तथाहि— श्रीजिनराजसूरीणां समीपे ग्राहितो व्रतम् ।
सुतो **जींदाभिधो** येन बालभावे प्रमादतः ॥११॥
लक्षमन्येन संयुक्तं यः पूर्वं कल्पपुस्तकम् ।
लेखयामास सद्वर्णं चित्रकृच्चित्रमण्डितम् ॥१२॥

पुत्रादिसुपरिच्छदेन सहितो विक्रीय सारं धनं
श्रीमत्श्रीजिनभद्रसूरिसुगुरोः शिष्टैर्महाविस्तरात् ।
चन्द्राष्टाम्बुधि-शर्वरीपति(१४८१)मिते वर्षे मडेवापुरे
चक्रे क्षुल्लकपाठकादिपदवीसंस्थापनाया महम् ॥१३॥
इतश्च —
वीरशासनमहाजलधिप्रवृद्धिचञ्चत्स्फुरच्छशिकरप्रकरोपमानः ।
मायन्मतान्तरकरित्रजपञ्चवक्त्रः श्रीमांश्चिरं विजय[ते] भुवि चन्द्रगच्छः ॥१४॥
तस्मिन्नभूत् श्रीजिनदत्तसूरि[ः] योगीन्द्रचक्री सुगुणैकधाम ।
तद्वंशपके रुहषण्डचन्द्रकान्तिर्गुरुः श्रीजिनचन्द्रसूरिः ॥१५॥
षट्त्रिंशद्वादजेता जिनपतिरभवन् सूरिरुरीकृतोरु–
श्रीमत्षट्स्थानकादिप्रकरणविवृतिप्राप्तपुण्योपकारः ।
सिद्धान्ताम्भोजहंसो यतिरतिमुकुटो भाग्यलक्ष्मीनिवासो
भ्राम्यन् मथ्यान्धकारे रविकरसमोरैर्मच्छरीतैर्विधाता ॥१६॥
मतङ्गजगतिर्जातो जिनेश्वरमुनीश्वरः ।
संयमारामसंवृद्धिभाद्रीयजलदोपमः ॥१७॥
जिनप्रबोधसूरीन्द्रचन्द्रो विश्वविबोधकृत् ।
जिनचन्द्राभिधः सूरिश्चन्द्रगच्छावतंसकः ॥१८॥
जात्यः श्रीजिनकुशलः सूरिः सुरीसमद्युतिः ।
संघस्याभिमतकृतौ छेकिलः कोकिलध्वनिः ॥१९॥
तदास्पदे श्रीजिनपद्मसूरिः पद्माकरः पद्मसमानपादः ।
तदन्वये श्रीनवलक्षशाखाविभूषणः श्रीजिनलब्धिसूरिः ॥२०॥
संजातो जिनचन्द्रः कन्दोभीष्टार्थसिद्धिवल्लीनाम् ।
तत्पट्टेऽप्युदयकरो जिनोदयाख्यो गुरुर्जयति ॥२१॥
भाग्यलक्ष्मीसमाश्लिष्टाः सोमवत् सौम्यमूर्त्तयः ।
कलाकेलिगृहं जज्ञुर्जिनराजयतीश्वराः ॥२२॥
पादप्रचारेण पवित्रयन्तः शशाङ्कवद् भूमितलं समस्तम् ।
विकासयन्तो जनकैरवाणि जयन्ति ते श्रीजिनभद्रपूज्याः ॥२३॥
मिथ्यातमश्छन्नदृशां जनानां कर्त्तु प्रकाशं तपनायतेऽदः ।
ज्ञानं भवेल्लेखितमक्षरायाधीतं श्रुतं पाठितमत्र रुच्याः ॥२४॥ इति ।
तेषामुपदेशाच्छ्राद्धः सुपरिवारसंयुक्तः ।
लेखयति स्म विशेषावश्यकविवृतिं स्वपुण्यार्थम् ॥२५॥
यदलेखि पत्तनपुरे श्रीमत्यणहिल्लनामके प्रवरे ।
तद् वाच्यमानमनिशं विबुधगणैर्नन्दतात् सुचिरम् ॥२६॥
इति श्रीविशेषावश्यकवृत्तिप्रशस्तिः ॥
संवत् १४८०(५)वर्षे शुभं भवतु ॥

[ 865 ] **अन्तः**— संवत् १८३५ वर्षे आश्विन्यशुक्ले तृतीया बुधवासरे इदं पुस्तकं लिपीचक्रे। लिखापिता च श्रीमद्गम्भीरविजयजी स्वात्मार्थे वा परोपकारार्थे । लिपिकृतं राजविमलगणिना हाडोतीदेसे(शे) वास्तव्यं(व्येन) मुस्सुदावादमहिमापुरमध्ये ।

[ 868 ] **आदिः**— जा.माणो वासमाणो विहरइ ॥
तत्रादिश्य क्षणं धर्म्मं देवोद्योते जगद्गुरुः ।
लाभाभावान्मध्यमायां महसेनवनेऽगमत् ॥१॥

अपापायां महापुर्यां यज्ञार्थी सोमिलो द्विजः ।
तदाहूतास्तदा जग्मुः एकादश महाद्विजाः ॥२॥

इति गणधरकथा ॥

पटेल प्रेमजी वाच श्रीः नाथः चेदम् । श्रीपुस्तकम् ।

[ 870 ] **अन्तः**— श्रीभ०श्रीभावप्रभसूरिणा यथामति वृत्त्यादीनि विलोक्य सुगमो व्यधायि मन्दमतीनां हेतवे ॥

[ 872 ] **अन्तः**— संवत् १७५१ वर्षे आसूसुदि ५ तिथौ श्रीनमस्कारबालावबोधार्थं सुगमीकृत्य लिखितः ।

महोपाध्यायश्रीपुण्यकलस( श )गणि-शिष्योपाध्यायश्रीजयरंगगणि-शिष्येन वा०चारित्रचन्द्रगणिना बुधैः शोध्यः ॥

[ 873 ] **अन्तः**— इति अष्टभंगी । इति श्रीनवकारबालाविबोधसंपूर्णम् ।
संवत् १७६४ वर्षे लिखितं भ०श्रीकल्याणचन्द्रसूरिणा श्रीसत्यपुरे चतुर्मासिकस्थितेन ॥

[ 887 ] **अन्तः**— इति प्रत्याख्यानभाष्यम् ॥
सकलपण्डितश्री ५. पं०तिलकविजयग० शिष्यपं०प्राणविजयलिखितम् ।

[ 890 ] **अन्तः**— संवत् १९१७ ना वैशाखव० २ अमदावादनगरे लषावितं सेठाणिहरकुंवरबाइपठनार्थं साध्वो झवेरसरीजी स्वात्मार्थे लपीतं पटलनागरदास ॥

[ 900 ] **अन्तः**— संवत् १५२५ वर्षे भाद्रवाशुदि १ गि(गु) रौ श्रीअ०पत्तन(अणहिल्लपुरपत्तन)-वास्तव्यनागरज्ञाती । त्र०(त्रवाडो) नाथलक्षत(लिखितम्) ।

[ 903 ] **अन्तः** – पण्डितश्रीज्ञानविमलगणिशिष्यमुनिदेवविमलेनाऽलेखि ॥ मृगशिरमासि...
बालावबोधश्च सुखाय तस्य स्तात् संततं देवमुनेः प्रसिद्धः ।
योऽलीलिखद् विक्रमराजपुर्यां सुमार्गशीर्षप्रतिवासरं यत् ॥१॥

[ 906 ] **अन्तः**— संवत् १७७१ कार्त्तिकसुदि १३ चन्द्रे लषो(लिखि)तं लासमध्ये ॥ पण्डितश्री १०८श्रीश्रीरत्नविजयगणि तत्शिष्यपं० श्रीरविविजयगणि-तत्शिष्यग०चतुरविजयलषो(लिखि)तमस्ति चेलाकरमचन्द ॥श्री॥

[ 907 ] **अन्तः**— संवत् १७४८ वर्षे कार्तिकशुदि ३ दिने । उपाध्यायश्री ५ श्रीराजरत्नगणि-
तत्शिष्यः सदाआज्ञाकारीपं० हेमरत्नगणिलिखितं बुधवासरे मोटाणाशुभस्थाने
श्रीपार्श्वनाथप्रसादात् ।। साध्वीश्रीगुणश्रीवाचनार्थे लपि(लिपी)कृतम् ॥

[ 909 ] **स्त० अन्तः**— विद्वज्जु(ज्ज)नशिरोरत्नश्रीविनयाद् विमलाभिधः ।
तत्पदाम्भोजभृङ्गात् श्रीधरविमल. कविः ॥१॥
तदीयपदसंसेविनयादिविमलः कविः ।
टबार्थो विशदीचक्रे लघुवृत्त्यनुसारतः ॥२॥
श्लोकानां सार्द्धत्रिशतिर्जाता सूत्रार्थसंख्यया ।
एतद्वाचन(क)सर्वो[ऽपि नित्यं] लोकः सुखीभवतु ॥३॥

[ 913 ] **स्त० अन्तः**— इति भाष्यत्रयसूत्रार्थसंपूर्णं समाप्तम् ।
संवत् १९११ ना कार्त्तिकसुदी बीज दीवस लखो रह्या राजनग्रमध्ये लषोतं वृर्वे
वृजरांम वनमालीदासपुत्रेण पठनार्थ गुरणीजी श्रीसूर्यस्वरीजि(श्रीजी) तत्श्री(शिष्या -
चन्द्रस्वरीश्रीजी-तत्शीष्यज्ञ्नवेरस्वरी(श्री)जीपठनार्थे चिरं जीयात् ।

[ 915 ] **अन्तः**— संवत् १९११ वर्षे मासोत्तममासे फागणमासे उज्ज्वलपष्ये(क्षे) तिथौ १० मी
रविवासरे । पं०श्रीमानविजयगणी । तत्र सी(शि)ष्यलालविजयऋषितं गाम
भोयात्राना वासी । सेसपु(पु)रे ग्रं० ११०० ।

**स्त०अन्तः**— संवत् १९११ वरषे मासोत्तममासे च उत्तमदिवसे च उत्तममासफागुणमासे
उज्ज्वलपक्षमध्ये च उत्तमतिथौ शुभतिथित्रीजमध्यान(ह्न)समयविजयमोहुतैय(मुहूर्ते)
प०मानविजयजी-पं०श्रीदूरसणविजयना सी(शिष्य) तत्र सेवकलालविजय-
लषीतम रहवासी गाम भोइयात्राना सेसपुरमध्ये लषी छे इति ॥ श्रीसंखेश्वरप्रसाद-
श्रीऋषभस्वामीप्रासाद-श्रीजीवतस्वामीपसाय । ग्रन्थाग्रन्थ ११ से (११००)
लषावीतं गरणीजी जीवसरीजी सा०नवलसरीजी ।

[ 916 ] **अन्तः**— संवत् १९१४ ना माहावदी ५ पांचम वार बुधे लखी रह्या राजनग्रमध्ये । लषीतंग
हीमतसंघ रामसंघपुत्रेण पठनार्थ गुरणीजी श्रीचन्दनश्रीजी तत्श्री(शि)ष्यज्ञवेरश्रीजी-
पठनार्थ चिर जीयात् ।

संवत् १९१४ ना माहावदी ५ ने वार बुधे आ ग्रन्थ संपूर्णः । लेखक
हीमतसंघ रामसंघ राजनगरे ॥

[ 920 ] **अन्तः**— स्वस्तिश्रीनृपविक्रमार्कसंवति २००४ वर्षे आश्विनकृष्णपक्षे दशम्यां तिथौ सौम्य-
वासरे संविग्नशाखीयाद्याचार्य-पांचालदेशोद्धारक-तपोगच्छाधिराज-श्रीमद्विजया-
नन्दसूरिपुरन्दरान्तेवासि--श्रीलक्ष्मीविजयमहाराजविनेयाणु-निखिलदेशविहारि-
अनेकतीर्थोद्धारक-शान्तमूर्ति-श्रीहंसविजयमुनीशान्तिषत्परमगुरुभक्त-शास्त्रलेखन-
संशोधनादिपरायण-अनुयोगाचार्य-पंन्यासश्रीसंपद्विजयजिच्चरणसरसीरुहभृङ्गायमाण-
शिष्यरत्नश्रीरमणीकविजयमुनिवरोपदिष्टया राजनगरापराभिध-अमदावादनगर-
वास्तव्यया खरोदीआउपाधिधारिश्रेष्ठिवरश्रीयुतचुनीलालात्मज-श्रेष्ठिश्रीजीवाभाई-
धर्मपत्न्या लीलाभिधया ज्ञानपञ्चमीतपउद्यापनार्थं स्वज्ञानावरणीयकर्मनिर्जरार्थं च

तपोगच्छीयाचार्यपादश्रीधर्मघोषसूरिविनिर्मितसंक्षिप्तसंघाचाराभिधवृत्त्या समलंकृतं सूरिपुरन्दरललामश्रीमद्देवेन्द्रसूरिचरणसंमुचितं चैत्यवंदनभाष्यमिदमलेखि ॥

उपदीकृतं चेदं संविग्नशाखीयाद्याचार्यश्रीमद्विजयानन्दसूरि–शिष्यरत्न–प्रवर्तकश्रीकान्तिविजयविनेयाणु–ज्ञानभंडारव्यवस्थापन-शास्त्रसंशोधन-लेखनादि-प्रवणमुनिश्रीचतुरविजयचरणाब्जचञ्चरीकाय लघुशिष्यमुनिपुण्यविजयाय ॥

लिखितं चेदमणहिल्लपुरपत्तनान्तर्गत–वागोलपाटकनिवासिना लेखकवरेण (लहिया)भोजकज्ञातीयेन ठाकोरपूनमचन्द्रसुपुत्रेण श्रीमनलालेनेति भद्रम् । वर्धतां श्रीश्रमणवीरवर्धमानविभोः प्रवचनम् । भद्रं भवत्वेतद्ग्रन्थलिखनलेखन–वाचना-ध्ययनाध्यापनश्रवणश्रावणतत्पराणां महानुभावानां भव्यसत्त्वानामिति ॥

सूर्याचन्द्रमसौ यावद् भ्रमतो जगतीतले ।
विद्वद्भिर्वाच्यमानाऽसौ तावन्नन्दतु पुस्तकम् ॥१॥

[ 930 ] अन्तः— सा० भाइचन्द सामजानी पुत्री बाइ सांकलीयें प्रतिलाभिता ॥

[ 938 ] अन्तः— संवत् १९४० ना वर्षे मासोत्तममासे शुभकारिउत्तममासे पौस(ष)मासे शुक्लपक्षे तिथिदशमीदिने शनिश्चरवारे लेखकानां नग्र(गर)विजापुरमध्ये लइया(लहिआ)हरि-लाल मालजी ज्ञातिहिंदु भर्मभाटः(ब्रह्मभट्टः)॥

[ 945 ] सूचनम्— ( एतत्प्रशस्त्यर्थं द्रष्टव्यं नं० 802 )

[ 950 ] अन्तः— संवत् १५५३ वर्षे चैत्रसुदि ८ रविवासरे श्रीमति पत्तन श्रीपूर्णिमापक्षे श्रीभुवनप्रभसूरीणा पदपंकजषट्पदेन शिष्येण मुनिना कमलसंयमेन मु०वीर-कलशसांनिध्यादिदं लिलिखे ॥

(अन्यदीयहस्तेन लिपीकृतमिदम् )

[पल्लयगिरि मिरी १ । उवला २ । पिंपोलया ३ । पुरि ४ । सपद ५ । जहगांहिआ ६ । कुद्दव ७ । जल ८ । वत्थाणि ९ ॥ स०॥]

[ 951 ] अन्तः— संवत् १५५५ वर्षे मार्गेमा[र्ग]वदि चतुर्थीरविवारे श्रीरूपपुरे श्रीपूर्णिमापक्षे श्रीभुवनप्रभसूरीणा पदपकजषट्पदा शिष्येन मुनिरत्नमेर(रु)लिषितम् ॥

[ 953 ] आदिः— ऐन्द्रवृन्द प्रणम्य तं पार्श्व शंखेश्वराख्यमभिनम्य(रुयं च)।
पाक्षिकसूत्रटबार्थं कुर्वे प्राकृतभाषया ॥१॥

अन्तः— इति पाक्षिकक्षामणाटबार्थो लिखितः ॥

श्रीज्ञानविमलसूरिप्रसादमासाद्य वार्त्तिकम् ।
लिखितं बुद्ध(ध)र्दीपसाय(ग)रशिशुना सुखसागरज्ञेन ॥१॥
यावच्चरमसमुद्रो यावन्नक्षत्रमण्डितो मेरुः ।
यावच्च पुष्पदन्तौ तावदिदं पुस्तकं जयतु ॥२॥
सद्भिः संशोध्यमानं वाच्यमानं मुनिव्रजैः ।
तत्पुण्यगण्यपीयूषरसपूर्णः स्तात् सुदृग्लोकः ॥३॥

ग्रन्थाग्रमानमुदितं पंच सहस्रं च सार्द्धसप्तयुतम् ।
गुण-मुनि-मुनि-विधुवर्षे (१७७३)माघमासेऽष्टमीपक्षे ॥४॥
श्रीसुरतिबिंदरीयशाखापुरसैदपुराभिधानेस्मिन् ।
श्रीविमलशान्तिकृतः प्रसादात् सदा भद्रम् ॥५॥
इति श्रीपाक्षिकसूत्रक्षामणासंपूर्णः ॥
संवत् १९१७ वर्षे श्रावणसुदी १२ सनी(शनि)वासरे संपूर्णम् ॥
पठनार्थं साधवी सणगारसरीजी ॥

[ 966 ] **अन्तः—** संवत् १६८२ वर्षे श्रीमदञ्चलगणाधिराजयुगप्रधानभट्टारकश्री ५ श्रीकल्याणसागरसूरीश्वरैः श्रीउत्तराध्ययनसूत्रं सर्वप्राज्ञशिरस्कोटिरपण्डितश्रीविशालकीर्त्तिगणये प्रदत्तम्। श्रीभीन्नमालनगरवास्तव्यसं० सूरा-भार्याकस्तूराइनाम्न्या लिखापितम् ॥

[ 967 ] **अन्तः—** संवत् १५६८ वर्षे वैशाखमासे शुक्लपक्षे पञ्चम्यां तिथौ गुरुवासरे पुष्यनक्षत्रे अद्येह श्रीपत्तनमध्ये श्रीश्रीमालवंशे ढंढेरकुटुम्बे दोसीपूनमसी-भार्याप्रथमाकुंअरी-द्वितीयारूडी एतच्छास्त्रं कुंअरिश्राविकायाः स्वपुण्यार्थं परोपकाराय च लिखाप्य श्रीपूर्णिमापक्षे प्रधानशाखायां श्रीजयप्रभसूरि-पट्टोदयगिरिदिनकराणां पूज्यश्रीपरमगुरुभट्टारकप्रभुश्रीभुवनप्रभसूरीणां प्रदत्तम् । चिरं जीयात् पुस्तककोशे पुस्तकमिदम् ॥

[ 968 ] **अन्तः—** संवत् १५०५ वर्षे मार्गशुदि २ गुरौ श्रीउपकेशवंशे सोनीजसराज-भार्याश्रा० अमरीनाम्न्या पं० ज्ञानमूर्त्तिगणीनां श्रीउत्तराध्ययनसूत्रं लिखाप्य प्रदत्तम् ॥

[ 969 ] **अन्तः—** (अन्यहस्ताक्षरेण विशेषः-)
मु० षीमचन्दजीने राजी थइने आपो छे । पं० ज्ञानविजयगणिः ।

[ 970 ] **अन्तः—** संवत् १६७६ वर्षे भाद्रपदमासे सितपक्षे(क्षे) द्वितीयाकुजदिने बाणारीसश्री-६[विद्यासुन्दर-तच्छिष्य बाणारीसश्री ६ तेजसुंदर-तच्छिष्यबाणारीसश्रीसुन्दर-तच्छिष्यऋषिधनसुन्दरेण इदं पुस्तकं वाच्यमा]नं कृतवान् श्रीगुडीप्रसादात् ग्रन्थाग्रम् २३५५ परिपूर्णम्, श्रीसंखेश्वरापार्श्वनाथप्रसादात् श्रीडुंगरग्रामे ।

[ 976 ] **अन्तः—** संवत् १५२९ वर्षे मार्गशिरशुदि ६ शुक्रे । चित्कोशे चिन्ताकारिभं० जय मन्दिरगणिना उपक्रमेण म० राजाकेन लिखिता श्रीउत्तराध्ययनचूर्णिः ॥
श्रीसीमंधरस्वामिने नमः ।
अस्ति स्वस्तिकरश्रीगूर्जरधरणीसुलोचनाकारम् ।
अणहिल्लपाटक पुरमपरप्रवरशृङ्गारम् ॥१॥
सौधश्रेणीमनोहरे प्रतिपद प्रासादशोभावरे
श्रीमान् श्रीअणहिल्लपाटकपुरे पुण्यैकरत्नाकरे ।
श्रीश्रीमालविशालवंशतिलकः प्रौढप्रतिष्ठास्पदं
जातः श्रीमदनः सहर्षवदनः साधुः सदा मन्दमः ॥२॥
तदङ्गजो विश्रुतनामधेयस्त्रैलोक्यलोकाद्भुतभागधेयः ।
बभूव भूवल्लभरूपधेयः श्रीदेवसिंहः स्वकुलैकसिंहः ॥३॥

तत्सुतः सकलविश्वविश्रुतः संघभक्ति-गुरुभक्तिसंयुतः ।
श्रीरिमादिकगुणैरलंकृतः शोभते सरवणाभिधस्ततः ॥४॥

तस्य शीलगुणनिर्मलगात्रं सत्कलत्रयुगलं गुणपात्रम् ।
आदिमा शुभति तत्र हि टीबूः स्त्रीषु रत्नमपरा खलु लक्ष्मीः ॥५॥

असूत सूनुद्वयमद्वयश्रीनिकेतनं सा समये तदाद्या ।
आद्यः सदाचारपरः सदाख्यो हेमाभिधो हेमसमो द्वितीयः ॥६॥

दीनेषु दानं स्वजनेषु मानं पात्रेषु वित्तं सुकृतेषु चित्तम् ।
तदा तदाद्यस्तु सदा ददानः सदाभिधः कं न चमत्करोति ॥७॥

शत्रुंजयाद्रौ गिरिनारशृंगे रंगेण यात्रां किल यश्चकार ।
परोपकारैकपरायणश्रीः श्रीमान सदाह्वानसुधीः सुधीरः ॥८॥

कल्याणकत्रयविहारविशालभद्र–
प्रासादपुण्यसफलीक्रियमाणवित्तः ।
श्रीपातसाहमहिमूदसभासु मान्यः
सोयं सदाभिधसुधीः समभूद् वदान्यः ॥९॥
यस्या भङ्गुरभाग्यभङ्गिसुभगस्या दत्तबब्बेरके–
त्याख्यां श्रीमद्... .. .. ...
(पश्चाद्भागो नष्टः ।)

[ 980 ] **अन्तः**— संवत् १९२९ रा मिती असाढसुदि ५ वार बृसपत(बृहस्पति)वार नें **व्यास मंगूमल्लेन** लिपीकृतं श्री**विक्रमपुर**मध्ये लिखितम् ।

[ 982 ] **सूचनम्**— (आद्यान्तभागः पूर्वटीकावद् वेदितव्यः । )

[ 984 ] **अन्तः**— सवत् १६१६ वर्षे श्री**फत्तेपानडेरा**मध्ये श्री**फत्तेषानदोदाई**राज्ये श्री**बृहत्-खरतरगच्छे** श्री**जिनभद्रसूरि**संताने तत्पट्टे श्री**जिनचन्द्रसूरि**–तत्पट्टे श्री**जिनसमुद्र-सूरि**–तत्पट्टे प्रतिष्ठितश्री**जिनहंससूरीश्वर**गणा तत्पट्टे श्री**जिनमाणिक्यसूरि**विजय-राज्ये विद्यमानगुरुतत्पट्टपूर्वाचलसहस्रकरावतारविजयमानगुरुश्री**जिनचन्द्रसूरि**-विजयराज्ये विशुद्धमासे आसाढसुदिद्व(द्वि)तीयादिने बुधवारे वाचनाचार्यवर्य-वरिष्ठगुणगरिष्ठश्री**लक्ष्मीप्रभ**गणिवराणां सतीर्थ्यशिष्यमुख्यप्रवरपण्डितो**त्तमराज-शेखर**गणिपं०**कुमारसुन्दर**गणिना लिपीकृता स्ववाचनार्थं पं० **रत्नसागर**–पं०**शुक्तिहर्षैः** चिरं **थइसिहयुते**र्लिपीकृता प्रति[ : ] श्री**उत्तराध्ययन**वृत्तिर्लिखिता पं०**कुमार-सुन्दर**गणिना स्वपठनार्थम् । श्रीसु(शु)भ भवतु लेषकपाठकयोः । प्रति[ : ] चिरं निद्या(नन्द्या)त् आचन्द्रार्कं यावत् । श्रीशुभशांतिर्भवतु ॥

श्री**जीरापु(प)ल्लिपार्श्व**नाथनी रक्षा शास्त्रधारकाणां वाचकानां लेखकानां कल्या[ण]मस्तु निरन्तरं सुषं शांतिश्रीः ।

॥ ॐ ॥ श्रीमद्विक्रमसंवत्सरातीतसंवत् १६६७ वर्षे ज्येष्ठवदिसप्तम्यां तिथौ शनिवारे **धल्लूर**स्थाने पातिसाहसुरताणजलालदीनअकबरमहाराज्ये श्री**बृहत्-**

खरतरगच्छे श्रीजिनभद्रसूरिसंताने वा० भानुप्रभगणि–तच्छिष्यमुख्यवा० सोमधीरगणि–वा० महिमलाभगणि–पं० कुशलसिंहगणि–पं० चन्द्रवर्धनगणि–तच्छिष्यमुख्य–वा० मेघनन्दनगणि–वा० दयानन्दनगणि–वा० जयविजयगणि–तच्छिष्यमुख्यवरिष्ठगुणगरिष्ठश्रीरत्नाकरोपाध्यायानामन्तिषत्पं० दानरंगगणि-पं० हेमसिंहमुनि–तत्सती-र्थै(र्थ्यै)न पं० नयसिंहेन स्वेन स्वेन टं० ८० पक्केन जगृहे पं० कुसलसोमपार्श्वात्।

[ 985 ] वृ०आदिः— उत्तराध्ययनस्येमां बालानां सुखहेतवे ।
वृत्तिं विनयहंसस्तु करोति रुचिरां लघुम् ॥१॥

[ 987 ] अन्तः— ( हरतालप्रयोगेन लिपिकारस्याभिधानादि प्रभ्रष्टम्, पश्चादयमुल्लेखः )

पाटणमध्ये लिषितम् । संवत् १७६८ ना मागशिरसुदि ११ माडितीनई-चैत्रवदि ११ संपूर्ण करी रवौ वारे भटेवाप्रसादेन पुनः उदयो भवति ।

[ 991 ] आदिः— इति श्रीउत्तराध्ययनावचूरिः समाप्ता । ग्रन्थाग्रम् ५२०० ।

संवत् १५१४ वर्षे चैत्र सुदि... ... श्रीलाटापल्ल्या बृहत्तपागच्छनायकभट्टा० श्रीरत्नसिंहसूरीशशिष्योदयमण्डनेन लिखिता भव्यानां श्रेयसे भवतु ॥

[ 992 ] सूत्रम्— ( आदिभागस्तु नं० 985 वद् ज्ञातव्यः । )

[ 993 ] अव०अन्तः— इति षट्त्रिंशत्श्रीउत्तराध्ययनाक्षरार्थलवलेशः संपूर्णः ॥३६॥
इति श्रीउत्तराध्ययनबालावबोधः संपूर्णः ॥
संवत् १६२६ वर्षे अस्वनि(आश्विन)वदि(१०)दसमीभूमवासरे लिषितं संपूर्णम् । लेखक-वं(वा)चकयोश्चिरं जीयात् ॥

[ 996 ] अन्तः— इति श्रीउत्तराध्ययनावचूर्णिः पूज्यश्रीज्ञानसुन्दरसूरिकृता समाप्ता ॥
संवत् १४८० वर्षे मार्गशीर्षमासे कृष्णपक्षे पञ्चम्यां सोमवासरे श्रीडुंगरपुरे लिखिता लींबाकेन ॥

[ 998 ] मू०अन्तः— श्रीउत्तराध्ययनसूत्रं समाप्तमिति ॥
संवत् १७१४ वर्षे जे(ज्ये)ष्ठवदि १३ शुक्रवासरे श्रीपत्तनमध्ये लिखितं वाच्यमानं चिरं निंद(नन्द)तु ॥

स्त०अन्तः— इति श्रीउत्तराध्ययनार्थः समाप्तः ॥
श्रीपूर्णिमापक्षे प्रधानशाखायां भट्टारकश्रीविनयप्रभसूरिणा लिखित मुनिश्रीकीर्तिरत्नादिशिष्यवाचनार्थम् ।

[ 1000 ] आदिः— प्रणम्य श्रीमहावीरं नम्राखण्डलमण्डलम् ।
आरभ्यन्ते कथा[ : ] कर्तुमुत्तराध्ययनस्थिताः ॥१॥

१ उत्तराध्ययनबृहद्वृत्तिगताः कथा[ : ] प्राकृताः कथा सर्वा अपि संस्कृताः कृतास्तपगच्छे भट्टारकचक्रवर्त्तिश्री६ विजयसेनसूरि-आचार्यश्री६ विजयदेवसूरिराज्ये संवत् १६७५ वर्षे पींपाडिग्रामे पण्डितप्रकाण्डपं० श्रीविमलसागरगणि-शिष्य-पं० पद्मसागरगणिना गणिप्रवरप्रेमसागरवाक्येन ।

कथा[ : ] कृताः पण्डितपद्मसागरैः स्वशिष्यवाक्यप्रणयेन संस्कृताः ।
पींपाडिपुर्यां श्रीपार्श्वनायकप्रसादतः सत्कुशलाय सन्त्विमाः ॥१॥

शोधयन्तु सज्जनाः ।

स्वस्त्यस्तु सज्जनेभ्यो येषां हृदयानि दर्पणमिभानि ।
दुर्वचनभस्मसंगादधिकतरं निर्म्मलानि स्युः ॥२॥

इति श्रीउत्तराध्ययनकथा[ : ] समाप्ताः । ग्रन्थाग्रन्थम् श्लोक ४५०० ॥
संवत् १७४८ वर्षे मार्गशिरवदिअष्टमीचन्द्रदिने रोप्पडनगरमध्ये लिषतं नेमऋषिः ॥ श्री ॥

[ 1001 ] स्त०अन्तः— भव्यानां सुवासनोत्पादिताऽमन्दानन्दे संतोषिताशेषविपश्चिद्वृन्दे श्रीधर्ममन्दिरोपाध्यायैरुद्धृते जीवाजीवविभक्तिनामकं षट्त्रिंशत्तममध्ययनं समाप्तं तत्समाप्तौ च समाप्तोयं ग्रन्थः ।

श्रीशान्तिवादिमारत्याऽनुग्रहो मकरन्द[क]: ।
उत्तराध्यनांभोजसंबन्धी गृह्यतां बुधैः ॥१॥

[ 1009 ] अन्तः— संवत् १९१९ ना वर्षे चैत्रशुदि ६ दिने बुधवासरे लषितं, ग्रन्थाग्रन्थम् ४००१ परिमाणम् ॥ लपीचक्रे भट्टारकः श्री ५ मुनिराजगौतमसाग[र]जी ॥ इदं पुस्तकं लिषावितम् । इदं(अयं) ग्रन्थः संपूर्णम्(र्णः) ॥

[ 1010 ] स्त०अन्तः— श्रीपासचन्दसूरीश्वरवि[र]चितटबार्थः संपूर्णः ॥

[ 1011 ] अन्त— संवत् १९०७ ना वर्षे आसाढमासे शुक्लपक्षे पञ्चम्यां तिथौ अर्कवारे श्रीजेसलमेरनगरे लिपिकृतं ऋषिअषैराज मुनि एनलइं श्रीउत्तराध्ययननउ टबउ तथा बालावबोध ऊपर लिप्यौ ते ग्रन्थाग्रन्थ षोडशसहस्र उपरि ५०० पंचोत्तरिंऽक्षर श्लोकसंपूर्ण एतस्य भावविजयी कथानक तत्संख्या क्रियते न, ग्रन्थाग्रन्थसहस्रः श्लोकसंख्या अत्र पुस्तिकारक्षणमाहात्म्यम् ।

[ 1012 ] अन्तः— संवत् १९२९ मिति आसोजवद ६ । श्री ॥ इति चूलिकाः ॥ इति श्रीमदुत्तराध्ययनस्तबकः समाप्तः ॥ संवत् १९२६ मितिआसोज वद २ ॥श्री॥

[ 1013 ] स्त०अन्तः— इति श्रीउत्तराध्ययमकथाटबार्थः संपूर्णः ग्रं० १०४०० व्यलेखि । श्रीउदयरत्नोपाध्यायैः स्वज्ञानवृद्धये ॥

[ 1017 ] अन्तः— एवं श्रीदशवैकालिकनामा महाश्रुतस्कन्धः ।
लिखितः श्रीगुरुलक्ष्मीसागरसूरीशशिष्याणाम् ॥१॥

मुख्यत्वाद् विबुधेषु चन्द्रतनुभा निश्शेषविद्याकलाः
धार(रि त्वात् प्रवरप्रभावविभवागारं यथार्थं सदा ।
येषां नाम पवित्रमन्त्रसमतां[– –]त्सुसौधप्रदं
तेषां श्रीमहिन्द्रसोमविबुधानां सावशिष्याणुना ॥२॥
अथ गद्यतोऽपि लिख्यते ।

इति श्रीदशवैकालिकश्रुतस्कन्धः लिखितः श्रीलक्ष्मीसागरसूरि-शिष्यपं०-इन्द्रसोमगणीनां शिष्येण ।

[ 1018 ] अन्तः— संवत् १७६८ वर्षे मार्गशिरशुदि ५ दिने श्रीरायधनपुरे वास्तव्यश्रीवृद्धगच्छे देवशाखायां आचार्यश्रीरत्नदेवसूरि-तत्पट्टे भ०सौभाग्यदेवसूरि-तत्शिष्यपं०-रामजी-तत्शिष्यपं०वस्ताजी-तत्शिष्यवेलजीपठनार्थम् ।

[ 1021 ] अन्तः— श्रीविद्यारत्नगणिपरिभोग्यम् ।

[ 1022 ] अन्तः— इति श्रीदशवैकालिकसूत्रं संपूर्णम् । संवत् १८४१ वर्षे शु० चैत्रशुदि १५ सोमवासरे पूज्यपरमपूज्यऋषि श्री१०८ श्रीजेसिंघजीतः ऋषि उरजालिपीकृतम् । वै० गोइन्दवाचनार्थे ॥

[ 1023 ] अन्तः— इति दशवैकालिकं संपूर्णम् ॥

नित्यानन्तचतुष्टयीस्फुटमतः श्रीपार्श्वनाथः प्रभु-
स्तत्पट्टे शुभदत्तनामगणभृद् बाभांबभूवादिमः ।
तस्मात् श्रीहरिदत्तको गणधरो यो जायते स्मावनौ
तत्पट्टांबुजिनीसहस्रकरतां श्रीकेशिनामाऽभवत् ॥१॥

तत्पट्टे प्रवरः स्वयंप्रभगुरुः सूरिर्विरेजे ततः
श्रीरत्नप्रभनाम सूरिरशुभत् श्रीयक्षदेवस्ततः ।
ततः श्रीगुरुककक्कसूरिरभवत् श्रीदेवगुप्तो गुरु-
स्तत्पट्टे प्रकटप्रतापमहिमा श्रीसिद्धसूरीश्वरः ॥२॥

तच्छिष्यमाणिक्य म(अ)गण्यधामा श्रीपाठकः श्रीधनसारनामा ।
तन्मुख्यशिष्यः सुगुणैः समृद्धः श्रीकीर्तिकल्लोल इति प्रसिद्धः ॥३॥

तदन्तिके भाति च हीरलक्ष्मी प्रवर्त्तिनी राजति पद्मलक्ष्मीः ।
तच्छिष्यिणी संयमलच्छि(क्ष्मी)रेखा संशोभतेऽशेषजनेषु रेखा ॥४॥

तया यतिन्या कमलाचच लक्ष्मीसंयुक्तया सुन्दरभक्तिभाजा ।
संलेखिताः श्रीदशवैकालिकस्यादर्शा मुदाष्टादशसंख्यकाश्च ॥५॥

रत्नसमुद्रगणिनां श्रीमत्श्रीवाचनाचार्यमहितानाम् ।
प्राप्योपदेशवचनं सदनं सकलस्य च रसस्य ॥६॥

एवं सज्जनसमुदयप्रवाच्यमाना अमी महाप्रतयः ।
सुचिरं जयन्तु मुनि-कर-बाण-महीसंख्यके वर्षे ॥
सं० १५२७ वर्षे ॥

[ 1034 ] आदिः— सिद्धिगइमुवगयाणं कम्मविसुद्धाण सव्वसिद्धाणं ।
नमिऊणं दशकालीयनिर्युक्ति कित्तइस्सामि ॥१॥
इह श्रीभद्रबाहुः श्रीदशवैकालिकनिर्युक्त्यादौ मंगलमाह ।

अन्तः— समाप्तं श्रीदशवैकालिकार्थः ॥ टीकेयं याकिनीमहत्तरासूनोराचार्यहरिभद्रस्य ।

दशवैकालिकटीकां विधाय यत्पुण्यमर्जितं तेन ।
मात्सर्यदुःखविरहाद् गुणानुरागी भवतु लोकः ॥१॥

टीकाग्रन्थाग्रम्–

शतानि पञ्चपञ्चाशत् पंचाशदधिकानि च ।
प्रत्यक्षरं निरीक्ष्यात्र श्लोकमानं विनिश्चितम् ॥१॥
श्रीमाणिक्यशेखरसूरीकृतटीका ॥

[ 1035 ] **आदिः**–– ॐ नमः सर्वज्ञाय ॥ नमः पंचपरमेष्ठिभ्यः ॥

अर्हन्तः प्रथयन्तु मङ्गलममी शृङ्गारयन्तः सदा
पादाम्भोजरजःकणैः क्षितिवधूं काश्मीरलेशैरिव ।
तत्त्वार्थैकविदां सुवर्णरचनामाकर्ण्य येषां मुखात्
तत्तद्भावनया रसेन लभते कल्याणकोटिं जनः ॥१॥

देवः केवलसंपदे भवतु वः श्रीनाभिराजाङ्गभू-
र्जित्वा येऽत्र जगत्रयीविजयिनं श्रीकामराजेश्वरम् ।
आदत्ता तपवारणत्रयमिदं केनाप्यवार्यं ततः
तत्पूर्वैरपि मूर्ध्नि सर्वविदितं निर्मीयतेऽद्यापि तत् ॥२॥

यज्जन्मस्नात्रकालेमलजलपटलेष्वासमन्तात् पतत्सु
स्वर्णाद्रिर्यो जनस्योज्ज्वलकलशमुखान्निर्गतेष्वन्तरास्थः ।
मेजे भ्राजिष्णुरभ्रामलकगृहगतो दीपवद् दीप्यमानः
स स्वामी वीरनामा किसलयतुतमामङ्गिनां मङ्गलानि ॥३॥

अङ्गानां क्रमतः स्थितिं गुरुतया विज्ञाय चिच्चक्षुषा
वृद्धायां श्रुतसंपदानुसमय यान्त्याः प्रभोराज्ञया ।
यावद् दुःप्रसभाभिधं गुरुमता हस्तावलंबं ददौ
यः कृत्वा दशकालिकं मुनिपतिः शय्यंभवः सोऽवतात् ॥४॥

शय्यंभवस्य श्रुतरत्नसिंधोः सर्वस्वभूतं दशकालिकं यत् ।
उद्घाट्य बह्वर्थसुवर्णकोशं तद्भव्यसुप्राप्यमहं करोमि ॥५॥

इति श्रीतिलकचार्यविरचितायां दशवैकालिकटीकायामुत्तरचूलिकायाष्टीका समाप्ता । इह श्लोकसहस्राणां सप्तकं सर्वसंख्यया प्रत्यक्षरेण ॥

( अन्यदीयहस्तेनाधिकम्– )

संवत् १५९० वर्षे वैशाखमासे शुक्लपक्षे पञ्चम्यां तिथौ शुक्रवासरे-अद्येह श्रीपत्तनमध्ये श्रीश्रीमालज्ञातीयढंढेरकुटुम्बे दोसी हरिचन्द्र–भार्यासुश्राविका-रत्नाई–पुत्रदोसी सूरा–दो०श्रीवछ–दो०रत्नापुत्र–पौत्रसहितैः श्रीदशवैकालिक-वृत्तिः श्रीपूर्णिमापक्षे प्रधानशाखायां भट्टारकश्री६कमलप्रभसूरिपट्टे भ० श्री६पुण्यप्रभसूरीश्वराणामुपदेशेन श्रीदशवैकालिकवृत्तिर्लिखाप्य स्वगुरुभ्यः प्रदत्ता वाच्यमानं चिरं नन्दतु भद्रं भवतु श्रीश्रमणसंघस्य ॥

[ 1036 ] **मू०आदिः—** श्रीसर्वज्ञाय नमः ॥ धम्मो मङ्गलमुक्क(क्कि)दठं०

**वृ०आदिः—** धर्म्मं उत्कृष्टं मंगलम् । किंलक्षणो धर्म्मः । अहिंसाजीवदयासंयमाः पंचेंद्रिय-निग्रहः ० ।

**अन्तः—** इति श्रीदृशवैकालिकं सूत्रं वृत्तिसहितं संपूर्णम् ॥

श्रीनीम्नराख्यनगरे विधिपक्षनाथश्रीभावसागरमुनीश्वरसुप्रसादात् ।

स धीमतां महा(हि)मरत्नसुपाठकानां शषोद(शिष्योऽयं) विनयहंसयतिः करोति ॥१॥

संवत्सरे युगल-सप्त-तिथिप्रमाणे(१५७२) वृत्तिं विलोक्य महतीमिति शिष्यकार्थम् ।

वृत्तिं च चित्रसहितां दृशकालिकस्य सा पण्डितैः विजयते किल वाच्यमाना ॥ २ ॥

॥ प्र० २५०० ॥ (पश्चात्कालीनेयं लिपिः)

प्रतिरियं राजपुरवास्तव्यश्रीसङ्घेन भांडागारे कृता भट्टारकराजेन्द्रसूरेरुपदेशात् सं० १९४१ वैशाख वद १० ॥

[ 1037 ] **वृ०आदिः—** श्रीवीतरागाय नमः ॥

स्तंभनाधीशमानम्य गणिः समयसुन्दरः ।

दृशवैकालिके सूत्रे शब्दार्थं लिखति स्फुटम् ॥१॥

**वृ०अन्तः—** विमुच्यते । विविधं अनेकैः प्रकारैः । अपुनर्ग्रहणपरमस्वस्थापादनलक्षणै-र्मुच्यते विमुच्यते ब्रवोमीति पूर्ववत् ॥१६॥ इति चूलिकाद्वयं व्याख्यातम् । अथ प्रशस्तिमाह—

**अन्तः—** हरिभद्रकृता टीका वर्त्तते विषमा परम् ।

मया तु शीघ्रबोधाय शिष्यार्थं सुगमा कृता ॥१॥

चान्द्रकुले श्रीखरतरगच्छे जिनचन्द्रसूरिनामानः ।

जाता युगप्रधानास्तच्छिष्यः सकलचन्द्रगणिः ॥२॥

तच्छिष्यसमयसुन्दरगणिना स्तंभतीर्थे ... ... ।

दृशवैकालिकटीका शशि-निधि-शृंगार(१६९१)मितवर्षे ॥३॥

अर्थस्यानवबोधेन मतिमान्द्यान्मतिभ्रमात् ।

जिनाज्ञाविपरीतं ... ... ... . . ॥४॥

इति श्रीदृशवैकालिकटीका समाप्ता ॥

संवत् १७४८ मंघसिर(मृगशीर्ष)मासे कृष्णपक्षे सोमवारे तिथा अष्टम्यां लाहोरनगरमध्ये उतराधगछे लिषाप्तं[प्यि] पूज्यदेवीदासऋष—तत्‌सिष्य—पूजहरिबंस-ऋष—तस्य शिष्यपूजं गोद्रऋष—तस्य शिष्यलिषितं मनसा ऋष आत्माअर्थे ॥

[ 1039 ] **अन्तः—** समाप्ता दृशवैकालिकटीका ॥

मणगं पडुच्च सिज्जंभवेण निज्जूहिया दृसज्झयणा ।

वेयालियाय ठविया तम्हा वेयालियं नाम ॥१॥

महत्तरया जा(या)किन्या धर्मपुत्रेण चिन्तिता ।

आचार्यहरिभद्रेण टीकेयं शिष्यबोधिनी ॥१॥

दशवैकालिकटीकां विधाय यत् पुण्यमर्जितं तेन ।
मात्सर्यदुःखविरहाद् गुणानुरागी भवतु लोकः ॥२॥
दशकालिकानुयोगात् सूत्र-व्याख्या पृथक्कृता ।
हरिभद्राचार्यकृतान्मोहाद् भक्त्याऽथवा मया ॥३॥
श्रीमद्बोधकशिष्येण श्रीमत्सुमतिसूरिणा ।
विद्वद्भिस्तत्र नो द्वेषो मयि कार्यो मनागपि ॥४॥
यस्माद् व्याख्याक्रमः प्रोक्तः सूरिणा भद्रबाहुना ।
आवश्यकस्य निर्युक्तौ व्याख्याक्रमविपश्चिता ॥५॥
सूत्रार्थः प्रथमो ज्ञेयो निर्युक्त्या मिश्रितस्ततः ।
सर्वैर्व्याख्याक्रमैर्युक्तो भणितव्यस्तृतीयकः ॥६॥
प्रमादकार्यविक्षेपचेतसां तदयं मया ।
क्रियाया अवबोधार्थं साधूनां तु पृथक्कृतः ॥७॥
लब्ध्वा मानुष्यकं जन्म ज्ञात्वा सर्वविदां मतम् ।
प्रमादमोहसंमूढा वैफल्यं ये नयन्ति हि ॥८॥
जन्म-मृत्यु-जरा-व्याधि-रोग-शोकाद्युपद्रुते ।
संसारसागरे रौद्रे ते भ्रमन्ति विडम्बिताः ॥९॥
ये पुनर्ज्ञान-सम्यक्त्वचारित्रविहितादराः ।
भवाम्बुधिं समुल्लङ्घ्य ते यान्ति पदमव्ययम् ॥१०॥
ग्रन्थाग्रम् २६०० ॥ कल्याणमस्तु ॥

[ 1040 ] **अन्तः**— ( पुस्तकलेखनानन्तरं लिखितमिदम्- )
संवत् १६९४ वर्षे श्रावणशुदि ९ गुरुदिने श्रीसागरचन्द्रसूरिशाखायां श्रीवा०जयनिधान-तच्छिष्यपंडितोत्तमश्री ३ लब्धिर्सिवजी-तच्छिष्यपं०उदयसिन्धुरस्य श्रीनानाविधरसिकश्रीसाधारणपुरवास्तव्यमंत्रिश्रीचतुरसाकेन श्रीज्ञानावरणीकर्मक्षयार्थं परि(प्र)तिरियं प्रदत्तास्ति स्वपुन्यार्थम् ।

[ 1043 ] **अन्तः**— इति द्वितीया चूलिका समाप्ता ॥
सं० १५२९ चैत्रवद १३ शुक्रे यशस्तिलकमुनिनैषाऽवचूर्णिः कृता ॥

[ 1045 ] **अव०अन्तः**— इति दशवैकालिकाऽवचूरिः समाप्ता ॥
इति विविक्तचर्यानाम द्वितीयाचूलाऽवचूरिः समाप्ता ॥
संवत् १६७२ वर्षे ज्येष्ठवदितृतीया शनिवासरे लिषतं मया स्वात्मार्थे पठनार्थे राधीशुभस्थाने । कल्याणमस्तु सर्वजगतः शुभं भवतु लेखक-पाठकयोः ।

[ 1046 ] **मू०अन्तः**— इति श्रीदशवैकालिकसूत्रं समाप्तम् ।
संवत् १६१६ वर्षे चैत्रमासे कृष्णपक्षे दशमि(मी)दिने शुक्रवासरे सेणोरापाडे लिषतं पांडे दासुः ॥

**अव०अन्तः**— इति श्रीदशवैकालिकाऽवचूर्णिरक्षरार्थगमनिका समाप्ता ॥

[ 1047 ] मू०अन्तः — इअ दसवेआलिअसुअक्खन्धो सम्मत्तो । ग्रन्थाग्रं श्लोकतः शत ७०० । संवत् १४८५ वर्षे प्रथमभाद्रपदशुदि षष्ठयामलेखि ।

अवअन्तः— इति श्रीदशवैकालिकावचूरिः समाप्ता ।
संवत् १४८५ लेखकविश्वनाथेन लिखितेति भद्रम् ॥

[ 1048 ] अन्तः— इति समाप्तौ ब्रवीमीति ॥ पूर्ववत् ॥ १६ ॥ इत्युत्तरचूलिकाटीका श्रीतिलकाचार्यरचिता काचिदक्षरगमनिकामात्रालेखि ॥

अधुना निर्युक्तिकारः श्रीमान् भद्रबाहुस्वामी दशवैकालिकश्रुतस्कन्धमहाशास्त्रकारिणः श्रीशय्यंभवसूरेर्गुणसंस्तवमेवमाविर्भावयामास । शय्यंभवाभिधानं युगप्रधानं गणधरं अनुत्तरज्ञान-दर्शनादिः गुणगणं धारयतीति गणधरस्तं जिनप्रतिमादर्शनेन हेतुभूतेन प्रतिबुद्धं मनकपितरं मनकाख्यापत्यजनकं दशवैकालिकमहाश्रुतस्कन्धस्य निर्यूहकं पूर्वगतोद्धृतार्थरचनकर्तारं वन्दे स्तौमीति गाथार्थः ॥१॥

अमुमेववार्थमाह निर्युक्तिकृत्—मनकाख्यमपत्यमाश्रित्य शय्यंभवेनाचार्येण पूर्वगतात् श्रुतादुद्धृत्य विरचितानि दशाध्ययनानि द्रुमपुष्पिकादीनि विकालवेलायामन्त्यचतुर्घटिकासमये स्थापितान्येकत्र कृतानि यतः तस्माद् दशवैकालिकं नाम व्युत्पत्तिः ॥२॥

षड्भिर्मासैरधीतं अध्ययनमिदं दशवैकालिकाख्यं श्रुतस्कन्धेप्यधीयमानत्वादध्ययनं व्यपदिश्यते आर्यमनकेन तस्य षड्मासा एव प्रव्रज्याकालः । अथ कालगतः समाधिना ॥३॥

आनन्दाश्रुपातमकार्षुः । अहो ! आराधितमनेनेति शय्यंभवाः स्थविराः श्रुतपर्यायवृद्धाः प्रवचनगुरवः । पूजार्थबहुवचनम् । यशोभद्रस्य शय्यंभवशिष्यस्य गुर्वश्रुपातदर्शनेन किमेतदाश्चर्यमिति विस्मितपृच्छा । भगवन् ! किमेतदकृतपूर्वमित्येवंभूता । कथना च भगवतः संसारस्नेह ईदृशः । सुतो ममायमित्येवंरूपा । चशब्दादनुताश्च यशोभद्रादीनामहो ! गुराविव गुरुपुत्रे वर्तितव्यमिति । न तत् कृतमस्माभिरित्येवंभूतः । गुरुराह-प्रतिबन्धपरिहारार्थं न मया कथितम् । नात्रभवतां दोषः । पुनः संघः प्रत्याह-अल्पायुषं मनकक्षुल्लकमवेत्य मयेदं शास्त्रं पूर्वेभ्यः समुद्धृतं तदिदानीं गोप्यतामवस्थाप्यतां चेति । संघः कथयतु ततो विचारेण संघे विचारणापूर्वं संघः कथयति स्म । का । ह्रासदोषात् प्रभूतसत्त्वानाम् । इदमेवोपकारकमतस्तिष्ठत्वेतत् । ततः सूरयः श्रुतोपयोगेन ज्ञात्वा स्माहुः-अङ्गोपाङ्गानि श्रुतानि दुःषमानुभावात् क्रमशःत्रुटिष्यन्ति । इदमेव वैकालिकं जीतकल्पश्च दुःप्रसहाचार्यं यावद् यास्यतः । एतावतैव पठितेन श्रुतेन स युगप्रधानः श्रुतधरो भविष्यति ततोऽस्मादेव कारणाद् युष्मद्वचनाच्च शिष्यप्रशिष्यैः पठ्यमानमिदमस्तु मङ्गलाय भूयात् श्रीसंघाय ॥४॥

इति श्रीदशवैकालिकावचूरिः ॥

संवत् १५९६ पौषमासे कृष्णपक्षे पंचमीदिने पूर्णिमापक्षे प्रधानशाखायां श्रीपुण्यप्रभसूरीणां शिष्यश्रीमाकेनालेखि ॥

[ 1049 ] **अन्तः**— श्रीस्तंभतीर्थे ओसवालज्ञातीयवृद्धशाखायां सोनीखटारण-भार्या-श्राविकाअधकू-सुतसोनीमहिपति-भार्याश्रा० गुरी-सुतासोमाई श्रीदशवैकालिकाव-चूरिर्लिखापिता । प्र०चन्द्रलक्ष्मीनामुपदेशेन ॥

[ 1050 ] **अन्तः**— श्रीदशवैकालिकावचूरिः समाप्ता ॥
पत्तनवासिश्रीश्रीमालीसं० पांचा-भार्यापाल्हणदे-सुतसं० वरजाकेन भा०ललही-पुत्रहाथादिकुटुम्बयुतेन परमगुरुगच्छनायकश्रीरत्नशेखरसूरीणा-मुपदेशेन लक्षग्रन्थं लेखयता ।
सं० १५११ वर्षे श्रीदशवैका(लिका)वचूरिर्लेखिता समाप्ता ॥

[ 1051 ] **बा०आदिः**— नमो जिनाय ॥
नत्वा श्रीवर्द्धमानाय प्रशमामृतशालिने ।
दशवै ालिकं सूत्रं श्रीशय्यंभवसूरिभिः ॥१॥
साध्वाचारविचाराढ्यं यत् कृतं पुण्यकामया ।
बालावबोधमधुना कामं तस्य तनोम्यहम् ॥२॥ युग्मम् ॥

**अन्तः**— इति श्रीखरतरगच्छीयश्रीजिनराजसूरि-विजनि(विनेय)श्रीराजहंसोपाध्याय-विहेय(न) विरचिते श्रीदशवैकालिकबालावबोधे दशवैकालिकनिर्युक्तिप्ररूपितं मूलोत्पत्तिरूपकथासंबन्धयुक्तं संपूर्णम् ।
यादृशं० ॥१॥ वा०जयलक्ष्मीगणिलि०रतनलक्ष्मीपठनार्थम् ॥१॥

[ 1052 ] **स्त० अन्तः**— विक्रमात् समयात् संवत् १६६७ वर्षे मार्गशीर्षमासे कृष्णपक्षे सप्तम्यां तिथौ रविवासरे पुष्यनक्षत्रे स्वभुजार्जितभट्टारकश्रीपार्श्वचन्द्रसूरिस्तित्पट्टे श्रीसमरचन्द्रसूरिस्तत्पट्टोद्योतकारकश्रीराजचन्द्रसूरिणा श्रीदशविकालिकस्य वार्तिकः कृतोयं संशोधनीयोयं कृपां विधायाधीय धीधनैः । जिनाज्ञाविरुद्धं यद् लिखितं तन्मे मिथ्यादुःकृतं भूयात् इति टबार्थः संपूर्णः । कल्याणं भूयात् ॥

[ 1053 ] **अन्तः**— संवत् १९१९ ना सरावण पेला वद १४ दने ली० साधु गोविंद-दास खुसालदास श्रीसेहेर पाहालणपुरमध्ये कमालपुरामध्ये लख्युं छेजो ॥ गरणीजी जडावसरीजी वास्ते परत लखो छेजी ॥

[ 1054 ] **स्त०अन्तः**— विलोक्य श्रीहारिभद्रवृत्तितोऽलेख्यायन्तम् ।
अशुद्धं दूरतस्त्याज्यं विद्वद्भिः सत्कृपापरैः ॥

[ 1055 ] **अन्तः**— इति श्रीदशवैकालिकसूत्रं समाप्तमिति ॥ श्री ॥ संवत् १६१८ वर्षे कार्त्तिकमासे चतुर्थीतिथौ रविवासरे श्रीविक्रमपुरमहानगरे लिषितम् ॥

[ 1056 ] **मू० अन्तः**— संवत् १८५१ वर्षे आसो वदि ५ दिने सोमवासरे भट्टारकश्री-विजयजैनिंद्र(जिनेन्द्र)सूरिस्व(रीश्व)रराजेः(ज्ये) सकलगणिः ।
सकलभट्टारकपुरि(रं)दरभट्टारकश्रीविजयरत्नसूरिस्व(रीश्व)रजी-तत्शिष्यसकल-गणिगरिष्ठविसि(शि)ष्टसि(शि)ष्याधिराज्यगणिश्री१९श्रीमान् विजयगणी-तत्षी(शि)-ष्यपण्डितश्री७श्रीकुशलविजयगणि-तत्षी(शि)ष्यपण्डितश्री५श्रीहस्तिविजयगणि-तत्षी(शि)ष्यविनेयी से०माणिका(क)विजयेन लिपीकृतं स्वआत्महेतवे माङ्गल्यम् ।

स्त० अन्तः— इति श्री दस(श)वैकालिक अर्थतः टबार्थ सर्व संपूर्णः ॥ श्रीअलीयापुरमध्ये ।

संवत् १८५१ ना वर्षे अश्वनमासे कृष्णपक्षे ५ तिथौ शशिवासरे सर्व सूत्रं संपूर्ण कृत्य(त)म् ।

संवत् १८५१ वर्षे कार्तिकमासे सु(शु)क्लपक्षे ८ दिने शुक्रवासरेऽर्थः संपूर्णः बफोरें ।

[ 1058 ] अन्तः— संवत १५१४ वर्षे माघमासे शुक्लपक्षे १३ दिने श्रीखरतरगच्छे श्री–सागरचन्द्रसूरि-वा०महिमराजगणि–तच्छिष्यवा०दयासागरगणिना समलेखि ग्रन्थो-यम् । श्रीमालज्ञातीयसं०चांदा-भार्यया सं०डालीसुश्राविकया लेखिता टीकेयं वा० महिमराजगणि–तच्छिष्यवा०दयासागरगणिवराणां श्रीमंडपे ।

सं० १५६२ वर्षे वैशाखशुद्धाक्षततृतीयादिने श्रीवीकानयरमहादुर्गे वा० ज्ञानमन्दिरगणिमामन्तेवासिदेवतिल[क]गणिना वाचिता किंचित् सशोधिता चेति वाच्यमाना नन्दतु ॥

[ 1062 ] अन्तः संवत् १५०५ वर्षे ।

( हरतालप्रयोगेन प्रभ्रष्टान्यक्षराणि– )

संवत् १६२७ वर्षे पोस(ष)शुदि ९ सा० वासण-पुत्रसा०सोधाकेन ।

[ 1067 ] आदिः— ॐ नमः सर्वज्ञाय नमः ॥ नमो अरहंताणं० ।

अर्हद्भ्यस्त्रिभुवनराजपूजितेभ्यः । सिद्धेभ्यः सितघनकर्मबन्धनेभ्यः ।
आचार्यश्रुतधरसर्वसंयतेभ्यः । सिद्धयर्थी सततमहं नमस्करोमि ।

अन्तः— सुगमा एसा अणुगहत्था फुडवियडविसुद्धवंजणाइ णमो इक्कारसहिं सएहिं तेतीसाहिएहि संगहिया ११३३ सुगमा ओघनिर्युक्तिटीका समाप्ता ॥

[ 1070 ] अन्तः— इति श्रीद्रोणाचार्यकृतवृत्तेः श्रीमदोघनिर्युक्त्यवचूरिः श्रीज्ञानसागरसूरिकृता समाप्ता ॥

संवत् १४९६ वर्षे वैशाखवदि ५ शुक्रे श्रीपत्तने आगमगच्छे शीलसुन्दर-गणियोग्यं महं०नाईयाकेन लिखितम् ॥ श्रीः ॥

[ 1072 ] अन्तः— चिदानन्दलहर्य्याख्या स्तुतिरेषा जिनेशितुः ।
आचन्द्रार्कं च वो भूयात् स्थायिनी मोददायिनी ॥४१॥

समाधिप्राग्भारामृतजलधिवेलाम्बुजननिः
मुदा स्पृष्टा येनोज्ज्वलतरचिदानन्दलहरी ।
महाताप हत्वा निबिडतरकर्मौघजनितं
महानन्दानन्दातुलविपुलसौख्यं स भजते ॥४२॥

मुदोपाध्यायेनेत्थमिति शिवचन्द्रादिगणिना
स्तुतिस्वच्छ संधार्य्या वरमिगरणे भव्यमतिभिः ।

सदौदार्यस्फूर्जद्विविधवरवर्णावलिलसत्–
स्वयंभूसंबद्धगुणमणिगणैः संविरचिता ।
कृपांभोधेर्माया क्षितिसुहल(?)पार्श्वेशितुरियं
स्तुतस्यासंख्येयैर्विविधविबुधेन्द्रैः क्रमनतैः ॥४३॥ षट्पदं काव्यम् ।

कलशः ।

भवसिन्धुवर्द्धनचन्द्रिकोपमकुमतितापसुचन्दनः
समभक्तिभरनिर्भरपुरंदरनिकरविरचितवन्दनः ।
घनकुशलकारी दुरितदारी सकलजगदभिनन्दनः
स भवतु भविनां भक्तिमनसां( ? साम )जनि वामानन्दनः ॥४४॥

इति श्रीपार्श्वेश्वरजिनेन्द्रस्तुतिगर्भिता अध्यात्मचत्वारिंशिका । सं०१९१२ वै० व० ।

[ 1073 ] अन्तः— सं० १९०५ कुञ्जरांवालाख्यपत्तने अध्यात्मचत्वारिंशिका लिखिता फागुणवदि ८ बृहस्पतौ विहारी(रि)ऋषिणा ।

[ 1092 ] अन्तः— इति श्रीचतुर्विंशतिजिननमस्कारः संपूर्णः ।
संवत् १८१८ वर्षे शाके १६८४ प्र० जेठसुदि १३ शुक्रे प्रानतोतारीयां पोल ... प०लब्धिलिष(खि)तम् ।

[ 1093 ] मू०अन्तः— इति श्रीपाक्षि[क]नमस्कारः संपूर्णम्(र्णः) ।
संवत् १७७८ वर्षे चैत्रसुदि ८ बुधे वासरे लपि(लिपी)कृतम् । राजनगरमध्ये लिखापितम् ।

स्त०अन्तः— ए नमस्कारनो टबोऽर्थ लिख्यो अर्थथी बालावबोधरूपे । पं०श्रीनयविमलगणि साधर्मिकजनइ बोध माटि इति मङ्गलम् । ग्रं०१५५ ॥
इति श्रीपाक्षि[क]नमस्कारः संपूर्णम्(र्णः) ।
संवत् १७७८ वर्षे चैत्रसुदि ९ गुरौ टबो संपूर्णः ।
या पृथवी या मेरुगिर या शशियर दिनकर ।
या लगी सुख चिर नन्दजौ ओ शास्त्र वाचणहार ॥

[ 1094 ] अन्तः— संवत् १८७२ वर्षे शाके १७३७ प्रवर्त्तमाने मिति आसोज सुद ११ शनिवारे ॥

स्त०अन्तः— ( अन्यदीयहस्तेनोल्लिखितमिदम्– ).
पं० श्रीसाधुजीश्रीतेजविजयजी लिपावी छइं श्रीपालीमध्ये लि०कपूरसागरग० ।

[ 1115 ] सूचनम्— सप्तविंशतिश्लोकात्मकं स्तोत्र, न तत्र काचित् प्रशस्तिः ।

[ 1193 ] अन्तः— संवत् १६११ वर्षे पोषमासे शुक्लतरपक्षे नवम्यां तिथौ क्षितितनयवासरे श्रीपूर्णिमापक्षनभोमार्गप्रकाशनैकदिनमणयः भट्टारकपादाः श्री३पुण्यप्रभसूरिपुरंदराणामन्तेवासिनां चेला वच्छाकेन लिलिखांचक्रे । शुभं भवतु देवगुर्वोः पादपङ्कजप्रसादतः चिरं नन्दतु वाच्यमानम् ॥

[ 1199 ] आदिः— संपूर्णमण्डलशशाङ्ककलाकलापपीयूषतां तव गिरः समुदीरयन्ति ।
ते नूनमुर्ध्वगतयः खलु शुद्धभावा भव्या भवन्ति शिवपूर्पथसार्थवाहाः ॥१॥

अन्तः— इत्यष्टकं विदुरवृन्दविनोदहेतोः श्रीमज्जिनस्य च मया निरमायि नूनम् ।
कल्याणमन्दिरपदैर्मुनिमानतुङ्गनिर्मापितस्तवपदैश्च निबद्धमिदम् ॥९॥
ये लक्ष्मीकल्लोलबुधप्रणीतमेनं समस्याष्टकमामनन्ति ।
स्तवद्वयान्तःस्थपृथक्पदोत्थमियत्यैवश्यं परमां रमाऽन्ते ॥१०॥

इति स्तवद्वयान्तर्गृहीतपृथक्पदनिबद्धं जिनस्तवरूपमष्टकं संपूर्णम् ।
पं०लक्ष्मीकल्लोलगणिकृतं विद्वज्जनमनोविनोदाय ॥ श्रीरस्तु ॥

वाचकचक्रशक्रश्रीशशिगणव्योमसोमश्रीदेवसोमगणिदृग्गोचरीकरणाय लिलिखामं मध्येकुमरगिरि ॥

संवत् १६६८ वर्षे चैत्रसित ५ मी गुरौ श्रीनवीननगरे । पं०सुमतिकुशलगणिना लिपीकृतं पत्रमिदम् ॥

[ 1342 ] आदिः— रुचिर्जिनोक्ततत्त्वेषु गुरवो यत्र साधवः ।

अन्तः— इति योगशास्त्रमध्याऽनुष्टुप्पादैः पृथग्निगदसिद्धिः ।
लक्ष्मीकल्लोलबुधो विरचितवानष्टकं समस्यायाः ॥९॥

इति समस्याष्टकं पं०लक्ष्मीकल्लोलगणिकृतं सं० १६८८ वर्षे चैत्रसुदि-४ दिने ।

[ 1398 ] अन्तः— श्रीमत्तपागणनभश्चरणे विनेयः श्रीसोमसुन्दरगुरोर्जिनकीर्त्तिसूरिः ।
स्वोपज्ञपञ्चपरमेष्ठिमहास्तवस्य वृत्तिर्व्यधाज्जलधि-नन्द-मनुप्रमेऽब्दे (१४९४)॥१॥

[ 1411 ] आदिः— अर्हदादीन् नमस्कृत्य स्वगुरूणां प्रसादतः ।
समस्मरणवस्तूनां कश्चिदर्थः प्रतन्यते ॥१॥

अन्तः— नागपुरीयतपोगणनाथाः श्रीचन्द्रकीर्त्तिसूरीन्द्राः ।
तच्छिष्यहर्षकीर्त्तिः सूरिरिमा वृत्तिमातनुतः(ते) ॥१॥

इति श्रीपंचसमस्मरणटीका संपूर्णा ।

[ 1412 ] अन्तः— इति श्रीसप्तस्मरणानि संपूर्णानि ॥

पण्डितश्रीतिलकसागरगणि-शिष्यमुनिजससागरलिखितानि श्रा०कपूरांपठनार्थम् । ओशवंशज्ञातीयसोनीश्रीवछ-भार्याबा०मोहनदे-पुत्रीश्राविकाकपूरांपठनार्थम् । सं० १६९९ वर्षे ।

[ 1415 ] अन्तः— इति श्रीधरणोरगेन्द्रस्तोत्रं संपूर्णम् ॥

संवत् १७०२ वर्षे माहमासे शुक्लपक्षे ६ तिथौ चन्द्रवासरे लिखितम् । सकलगणिगजेन्द्रश्रीलब्धिविजयग०-तत्शिष्यहर्षविजयेन । वामस्थलीनगरे ॥

[ 1417 ] अन्तः— इति श्रीलघुशांतिस्तवनं समाप्तमिति ॥

संवत् १६६८ वर्षे वैशाखशुदि १२ अर्कवासरे श्रीखरतरगच्छे पंडित-श्रीराजकलशमुनि-शिष्यान्तेवासी(सि) पं०गुणसागरेण लिपीकृतमिदं (तानि)सप्तस्मरणाणि(णि) पातिसाहसाहसलेमजहांगीरहुजरिराजे ।

[ 1418 ] अन्तः— इति श्रीबृहच्छान्तिः संपूर्णा । म०श्रीविजयप्रभसूरीश्वर–शिष्यपं०ऋद्धिविजयग०लिखितं शिष्य–गणिरामविजयपठनार्थम् ।

संवत् १७५७ वर्षे आसोवदि २ गुरुवारे खांसानगरमध्ये ।

[ 1420 ] स्त०अन्तः— इति मानतुङ्गसूरिविरचितभक्तामराभिधानश्रीमयुगादिदेवस्तोत्रस्यार्थः संपूर्णमि (इ)ति श्रेयः ॥

संवत् १७४२ वर्षे आसो सुदि ५ लिखिता पं०सुखसागरेण स्वार्थे मोरवाडामध्ये । इति श्रीअजितशान्तिस्तवटबार्थः ।

श्रीअजितशान्तिस्तत्र स्तबुकार्थो वर्णविषयता भी(नी)तः ।

नयविमलेन प्रकटं विहितोयं मुग्धबोधकृते ॥१॥

[ 1421 ] मू०अन्तः— संवत् १८५३ वेसाषसुदि २ दिने वारसु(शु)के पं० रूपविजयग० । सी(शि)·भक्ती(क्ति)लषो(खि)तम् । श्रीजामपुरमध्ये मध्यान(ह्न)समये ।

स्त०अन्तः— इति श्रीसंवत् १९०९ ना वर्षे प्रथमभाद्रवदशुक्लपक्ष ७ दने थावरवासरे लषीतं मात्मा भोजाजी पालणप(पु)रमध्ये लष्युं छे । श्रीपंन्यास-अमृत्यतवजेजी–सीससुखवजेजी-सीस नीत्यवजेजी तथा भाई भणनार परसोतमपठनार्थः ।

[ 1424 ] स्त०आदिः— श्रीपार्श्वजिनमाम्य फलवर्द्धिपुरस्थितम् ।

सप्तानां स्मरणानां च टबार्थो लिख्यते मया ॥१॥

पर्वदिननइं विषइं सर्वमंगलीकने अर्थे अने क्षुद्रोपद्रवदोष वारवाने अर्थे अने कारण पडये सुखशांतिकने अर्थे० ... ... ...

अन्तः— इति श्रीलघुशांतिस्तवाभिधं सप्तस्मरणस्य टबार्थः कृतः । सकलपंडितश्री ५–श्रीपद्मसागरगणि-शिष्यसकलवाचकचक्रवर्त्तिमहोपाध्यायश्री ५ श्रीकुशलसागरगणिशिष्य-पंडितश्री ५ श्रीउत्तमसागरगणि–शिष्य पंडितश्री ५ श्रीकांतिसागरगणि–शिष्य पं०-गौतमसागरगणिलिपीकृता । श्रीआऊआनगरे श्रीऋषभनाथप्रसादात् । सकल-पंडितश्री ५ श्रीकेसरसागरगणिभिः कृतः अयं टबार्थः ॥

संवत् १७६२ वर्षे कार्त्तिकवदि १३ धन्यत्रयोदश्यां तिथौ बुधवारे संपूर्णीकृता ॥ श्रीसकलविद्वज्जनशिरोमणिपंडितश्रीकेसरसागरगणिनां प्रवृत्तिः । श्रीऋषभनाथप्रसादात् श्रीशांतिजिनप्रसादात् ॥

[ 1440 ] आदिः-- श्रीजिनं सर्वतोभद्रचित्रेणाकर्णितुं मया ।

प्रारभ्यते सुधीलोकालोकनायाल्पमेधसा ॥१॥

अन्तः— इदं सर्वतोभद्रचित्रेण जैनं मया निर्ममे निर्ममेनाष्टकं च ।

लसल्लक्ष्मि(क्ष्मी)कल्लोलनाम्ना बुधेन प्रबुद्धप्रबोधार्थसिद्धिप्रसिद्धयै ॥१२॥

भुजंगप्रयातछन्दः ।

इति श्रीसर्वतोभद्राष्टक–अर्द्धभ्रम–समविपरीतपादपादचित्रेण श्रीऋषभदेव-स्तोत्र महोपाध्यायाधिराजचक्रचक्रवर्त्तिश्री ६ हर्षकल्लोलगणि–शिष्यभुजिष्यपदपांशुना पं० लक्ष्मीकल्लोलगणिना कृतम् । प्रवीणैः पठ्यमानं चिरं नन्दतात् ।

[ 1460 ] वृ०आदिः— श्रीगुरुभ्यो नमः ॥

वृत्तिं भक्तामरादीनां स्तवं वच्मि यथोचितम् ।
संक्षेपान्मुक्तिलाभाद् यो मुग्धबुद्धिप्रबुद्धये ॥१॥

अन्तः— इति श्रीखंडिलगच्छसंबंधिश्वेतांबराचार्यशांतिसूरिविरचितश्रीमानतुंगसूरिकविकृतभक्तामराख्यसूत्रवृत्तिः परिसमाप्ता ॥ ग्रंथाग्रम् ४२८ सर्वमीलने ॥

संवत् १७०१ वर्षे पंडितश्रीविद्यारत्नगणि–तत्शिष्यपंडितश्री५श्रीलावण्यरत्नगणि–तत्शिष्यपंडितश्रीकीर्तिरत्नगणि-तत्शिष्यराजरत्नेन स्ववाचनकृते स्व हस्तेनालेखि । श्रीभक्तामरदीपिका संपूर्णा ॥ श्रीमद्विद्यापुरशाहपुरे ।

[ 1462 ] अन्तः— इति उपाध्यायश्रीरत्नचंद्रगणिविरचिता श्रीभक्तामरस्तोत्रवृत्तिः ॥

इति श्रीभट्टारकश्रीहीरविजयसूरींद्रैः सह आगरादेशविहारकृतां स्वकृत–कृपारसकोशग्रंथश्रवण–पातसाहश्रीअकब्बररंजितचित्तानां सकलदेशे श्रीहीरविजय-सूरींद्रनाम्ना जीजीआकरमिवारणकारितस्फुरन्मानानां तथा श्रीहीरविजयसूरींद्रनाम्ना षण्मासिजीवाभयदानकारितस्फुरन्मानानां ईश्वरप्रतिश्रीराजनारायणसभासमक्षं वादिभूषणक्षपणकेन सह वादेन लब्धजयवादानां वादिभूषणेतिनामस्थाने वादि-भूंकणेतिनामकृतां श्रीजंबूद्वीपप्रज्ञप्तिप्रमेयरत्नमंजूषानाम बृहद्वृत्तिः कृता महोपाध्यायश्रीशांतिचंद्रगणिवराणां चरणकमलरसिकचंचरीकायमाणैः महोपाध्यायश्री–रत्नचंद्रगणिभिर्विरचिता ॥

सं० १८१५ काती(र्तिक)वदि ५ देवपक्षे उदयपुरे ।

[ 1464 ] वृ०अन्तः-- इति भक्तामरस्तवव्याख्या ॥

श्रीधनेश्वरसूरीणां मूलपट्टक्रमागतैः ।
श्रीमच्चित्रैत्रगच्छीयैः श्रीगुणाकरसूरिभिः ॥१॥
जिन–बाण–धरा(१५२४)संख्ये वर्षे मासि च कार्त्तिके ।
भक्तामरस्तोत्रवृत्तिः कृता दृष्टांतसंयुता ॥२॥ युग्मम् ॥

इति भक्तामरवृत्तिः संपूर्णा । ग्रंथाग्रम् अक्षरगणनया २०२८ ॥ यादृशं० ॥

एकमप्यक्षरं यस्तु गुरुः शिष्यं निवेदयेत् ।
पृथिव्यां नास्ति तद् द्रव्यं यत् कृत्वा अनृणीभवेत् ॥

संवत् १५५४ वर्षे आसूवदि चुदसि सोमे । श्रीचैत्रगच्छे भट्टारि(र)कश्रीचार(रु)चन्द्रसूरिः ॥

[ 1465 ] अन्तः— अन्योप्यर्थः सुधीभिः स्वधिया व्याख्येय इति चतुश्चत्वारिंशद्वृत्तार्थः ।
संपूर्णस्तत्संपूर्तौ संपूर्णेयं भक्तामरस्तववृत्तिः सप्रभावकथानकसंयुक्ता ।

श्रीचन्द्रगच्छे श्रीअभयसूरिवंशे श्रीरुद्रपल्लीयगच्छोद्भवश्रीगुणचंद्रसूरि–शिष्यश्रीगुणाकरसूरिरेनां चक्रे ।

संवत् १४२६ वर्षेतौ नभस्यमासे श्रीसरस्वतीपत्तने ... ... ... ।

संवत् १५२५ वर्षे वैशाख शुदि सप्तम्यां पुष्यनक्षत्रे श्रीभक्तामरस्तववृत्तिर्लिखिता । वाचनाचार्यशिरोरत्न पं० मंदिररत्नगणिचरणांबुजचंचरीकेण ।

[ 1467 ] **अन्तः—** इति भक्तामरस्तोत्रमहास्तवनवृत्तिः संपूर्णा ॥

*संवत् १६९९ वर्षे आसोसुदि ११ रवौ लिखितं भट्टारकप्रभुश्री (७)* हीररत्नसूरीणां तत्शिष्यपंडितश्रीलब्धिरत्नगणि-तत्शिष्यश्रीमुनिश्रीविजयरत्नेन लिपीकृतम् । स्वशिष्यश्रेणिपठनार्थम् [–]र्णाकपुरे गणिश्रीविबुधरत्न ... ।

[ 1469 ] **अन्तः—** श्रीअमरप्रभसूरीशा वैदुष्यगुणभूषिताः ।
भक्तामरस्तवीं वृत्तिमकार्षुः सुखबोधिकाम् ॥१॥
साधुश्रीवाचनाचार्यदेवसुन्दरसद्यतेः ।
तस्याभ्यर्थनतोप्येवं गुणरत्नमहोदधेः ॥२॥
इति श्रीभक्तामरस्तवटीका ॥

सं[व]त् १७२१ वर्षे अश्विनमासे शुक्लपक्षे द्वादश्यां तिथौ शवारे । उपाध्यायश्रीमति(त्)कीर्त्तिजीगणि-शिष्यवा०श्रीसुमतिसिंधुरजीगणि-शिष्यमुख्यपंडित श्रीकनककुमारजीगणीनामंतेवासिना कनकविलासेनालेखि ।

[ 1474 ] **वृ०आदिः—** श्रीशंखेश्वरपार्श्वं नत्वा भक्तामरस्तवस्यार्थम् ।
श्रीविजयप्रभसूरेर्लिखामि वचनात् सुशिष्यार्थम् ॥१॥

**अन्तः—** सूरिश्रीविजयप्रभप्रमुखादेशात् शिशूनां हितं
देशावृत्तिमिमां व्यधत्त विधिना श्रीमेघनामा कविः ।
शिष्यः श्रीसुधियां कृपादिविजयाख्यानाम मुख्यां पुन-
र्यद् दृष्टं तदिह प्रसादसदनैः शोध्यं विशुद्धाशयैः ॥१॥
इति भक्तामरस्तवराजवृत्तिः पूर्णा श्रियेऽस्तु । यादृशं० ।

संवत् १७६० वर्षे शाके १६२५ प्रवर्त्तमाने प्रथमश्रावणमासे कृष्णपक्षे तिथौ द्वितीयचतुर्दश्यां शुक्रवारे लिपीकृतम् । श्रीबीकानेरमध्ये ।

[ 1476 ] **वृ०आदिः—** श्रीगुरुभ्यो नमः ।
प्रणम्य परमानंददायकं परमेश्वरम् ।
वृत्तिं भक्तामरस्याहं कुर्वे बालहितैषिणीम् ॥१॥

**वृ०आदिः—** श्रीमत्तपागणगगनांगणदी(?दि)नमणी(?णि)हीरविजयसूरीणाम् ।
शिष्याणुना विरचिता वृत्ते(?त्ति)र(?रि)यं कनककुशलेन ॥१॥
इति भक्तामरस्तोत्रं संपूर्णम् ।

भट्टारकश्री १०८ श्रीरत्नसागरसूरीश्वरजीविजे(विजय)राज्ये श्रीमुंबईबंदरे श्रीअंचलगच्छे भातबजारमध्ये वोसाने अपासरे चतुर्मासो(सो) कर्यो श्रीआदीश्वरजी-प्रसादात् । लिपीकृतं मु०भाग्यशिखरजीगणी तत्शिष्यमु०प्रमोदशिखरजीगणी तत्शिष्यमु०कि(की)र्त्तिशिखर-तत्शिष्यवरमोतीचन्देन लिपिकृतं स्वआत्मा-अर्थे ।

संवत् १९१७ ना शाके १७९३ प्रवर्त्तमाने कार्त्तिकमासे शुक्लपक्षे एकादशीती(ति)थौ शुक्रवासरे मुंबइमध्ये अपासरा बे छे अंचल ... ... ।

[ 1477 ] अन्तः— श्रीमत्तपागणगगनांगणदिनमणिहीरविजयसूरीणाम् ।
शिष्याणुना विरचिता वृत्तिरियं कनककुशलेन ॥१॥
नयन-शर-रसेंदुमिते(१६५२)वर्षे वैराटनाम्नि वरनगरे ।
बालजनविबोधार्थं विजयदशम्यां हि समाप्ता ॥२॥ युग्मम् ।
श्लोकानां षट्शती षोडशोत्तरा समभवत ।
प्रत्यक्षरं गणनया वृत्तौ संख्या निवेदिता ॥३॥
अंकतोपि ६१६ सूत्रसहितवृत्तेर्ग्रन्थाग्रम् ६९३ ।
इति भक्तामरस्तोत्रवृत्तिः ।
संवत् १६८५ वर्षे श्रावणवदि ६ दिने गणिदेवसागरेणालेखि श्रीस्तंभा-
नतनगरे ।
(हस्तान्तरलेखनमिदम्—)
पंडितश्रीजयसुन्दरग० नी परति । सकलपंडितशिरोमणिपंडितश्री ५
पं०कपूरविजयग० तत्शिष्यपंडितजिनविजयपठनार्थम् ।

[ 1481 ] अव०आदिः— प्रणम्य परमानन्दप्रदं निजगुरोः बालबोधकृते भक्तामरस्यार्थो लिख्यते ।
मू०अन्तः— इति श्रीभक्तामरस्तोत्रं संपूर्णम् । लिखितं मुनिनयविजयेन श्रीराज-
नगरे । श्रीपार्श्वनाथप्रसादात् ।
अव०अन्तः— श्रीलाभविजयप्राज्ञशिशुना बालबोधदा ।
श्रीभक्तामरसूत्रस्य लिखिता वृत्तिरद्भुता ॥१॥
इत्याचार्यश्रीमानतुंगसूदी(रि)विरचितभक्तामरस्तोत्रस्य स्तबकावचूर्णिः संपूर्णा ।
लिखिता सकलपंडितशिरोमंडनसकलपंडितोत्तम पं०श्री १०८ श्रीज्ञानविजयगणि-
शिष्यमुनिनयविजयेन आत्मार्थं श्रेयोस्तु श्रीः । संवत् १७२६ वर्षे फाल्गुनवदि
१३ दिने ।

[ 1487 ] अन्तः— श्रीरुद्रपल्लीयगच्छेशश्रीगुणचन्द्रसूरि-शिष्यश्रीगुणाकरसूरिकृता वृत्तितो भक्ता-
मरस्तवविषमपदावचूरिः समाप्ता ।
संवत् १४ एकासीआ(८१) वर्षे मार्गशरशुदिप्रतिपदिनेऽलेखि ।

[ 1491 ] बा०आदिः— श्रीऋषभाय नमः ॥
प्रणम्य श्रीमहावीरं मत्वा च श्रुतदेवताम् ।
श्रीसर्वसुन्दर(जिनकीर्त्ति)सूरीणामासाद्यादेशमुत्तमम् ॥१॥
मुग्ध(बाल)लोकप्रबोधार्थमेषोहं मेरुसुन्दरः ।
भक्तामरमहास्तोत्रं करिष्ये वार्त्तया मुदा ॥२॥ युग्मम् ॥
मू०अन्तः— इति श्रीभक्तामरनामस्तोत्रं श्रीमानतुंगसूरिणा रचितं पूर्णमजनि ॥ संवत्
१९२२ मा आसोसुदी १५ दिने ।
स्त०अन्तः— इति श्रीभक्तामरनामस्तोत्रं श्रीमानतुंगसूरिविरचितं टबार्थ-कथा-मन्त्र-
सही(हि)तं संपूर्णम् ॥ श्रीमत्तपागच्छे सकलभट्टारकशिरोवतंससभट्टारकश्री ५-

श्रीज्ञानरत्नसूरीश्वरतत्पदे विद्यमानभट्टारकश्री५श्रीकीर्तिरत्नसूरीश्वरसरोवनंश(श्वर-शिष्या-वतंस)पं०श्रीकल्याणरत्नजीगणिनां तद(त्)शिष्यपं०[इतः परं नास्ति किञ्चिदपि लिखितम् ।]

[ 1511 ] **अन्तः—** भावप्रभाख्यवरसूरिगणाधिपेन श्रीजैनधर्मवरसंस्तवनं सुरम्यम् ।
शिष्यस्य कौतुककृते रचितं सुबोधं कल्याणमन्दिरसदन्तिमपादलग्नम् ॥४५॥

इति श्रीकल्याणमन्दिरांत्यपादसमस्यामयं श्रीजैनधर्मवरसंस्तवनं श्रीपौर्णिमीयगच्छाधिराजश्रीभावप्रभसूरिणा रचितम् ॥

संवत् १७९१ वर्षे भाद्रपदमासे कृष्णपक्षे अष्टमीतिथौ रोहिणीपतिवारे श्रीमदणहिल्लपुरपत्तने ढंढेरपाटके पूर्णिमापक्षीयभट्टारकश्री ५ श्रीभावप्रभसूरिविजयराज्ये सतीर्थ्यालालजी(सतीर्थ्यलालजी)केनेदं पुस्तकं लिवी(पी)कृतम् लघुशिष्यज्योतीरत्नपठनार्थम् श्रीश्रेयः ॥ काव्यम्—

सन्तु: कुरंगकुटकुंजसत्कलुमत्कौंचांककूर्मकजकेशरिकंचुकांकाः ।
कोलांककुंडलिकलाधरकासरांकाः कप्पंककः कुलिशकांककिशोरकांकौ ॥१॥

[ 1519 ] **अन्तः—** इति श्रीअजितशांतिस्तवनं संपूर्णम् ।
संवत् १७३७ वर्षे ज्येष्ठसुदिप्रतिपदातिथौ रविवासरे श्रीभाग्यनगरमध्ये पं०श्री ५ श्रीविमलचन्दगणि–मुनिश्रीजयचन्दजीमुनिश्रीअमरचन्दजी–मुनिश्रीचतुरचन्दजीलिखितम् । सुश्रावकपुन्यप्रभावकदेवगुरुपरमभक्तिकारकसा०जयतीदास–सा०ऋषभदासश्राविकाबनोईपठनार्थम् ॥श्री॥

[ 1522 ] **मू०अन्तः—** इति श्रीअभिनन्दनजिनस्तोत्रम् ॥ अष्टोत्तरशतसंवरशब्दार्थगर्भितम् ।
श्रीतपागच्छाधिराजश्रीहेमविमलसूरिणा कृतं लिखितं च श्रीस्तयंबलिकशुभनगरे संवत् १६५६ मार्गशीर्षवदि ८ बुधवासरे ॥

**वृ०अन्तः—** इति श्रीअष्टोत्तरशतसंवरशब्दार्थगर्भितश्रीअभिनन्दस्तोत्रावचूरिः संपूर्णा लिखिता कृता च श्रीतपागच्छाधिराजश्रीहेमविमलसूरिशिष्याणुना श्रीसौभाग्यहर्षसूरिपट्टधारिणा श्रीसोमविमलसूरिणा श्रीस्तयंबलिकशुभनगरे विद्वज्जनैः प्रसादमाधाय संशोध्या कल्याणं भवतु पाठक–वाचक–श्रोतृकसाधुजनपरंपराणाम् ॥ संवत् १६५६ मार्गशीर्षमासे ।

[ 1558 ] **मू०अन्तः—** श्रीकल्याणनिर्मलगुरोश्चरणप्रसादाद् भक्तामरस्तवनपादतुरीयमासा ।
पादत्रयेण रचितं स्तवनं नवीनं विनयाञ्चितेन मुनिना विमलस्य शांतेः ॥४५॥
इति श्रीशांतिभक्तामरस्तोत्र संपूर्णम् ।

संवत् १९१२ ना वर्षे माघविद ८ शुक्रे लिषतं गुरुजीश्री ५ ईंगसागरजीगणि–तत्शिष्यमुनिफतेसागरगणि–तत्शिष्यमुनिदेवसागरलिपीकृतं श्रीकोटा–यमध्ये चतुर्मासं भ० ।

[ 1559 ] **अन्तः—** संवत् १५६३ वर्षे मार्गसरिमासे शुक्लपक्षे सप्तम्यां रविवारे पूज्यपं०श्रीहर्षरत्नग०जयकल्लोलादि श्रेयोस्तु ॥

प्राग्वाटज्ञातीयकोठारीनरसा–भार्याश्राविकाआसू पु०कोठारीसोमा–भार्या

श्राविकाहर्षू-पुत्रकोठारीनायकपठनार्थं ग०भुवरत्नेन लषितं लेखक-वाचकयोः शुभं भवतु श्रीरस्तु अर्गा(त्रिभ्यग्र)मपुरे ॥

[ 1662 ] वृ०अन्तः— श्रीउकेशगणाब्धिचन्द्रसदृशा विद्वज्जनाह्लादन-
प्रावीण्याद् धर्मसारपाठकवरा राजन्ति भास्वत्तराः ।
तच्छिष्यः समुदाऽपि देवतिलकः सद्बुद्धिवृद्धिप्रदां
श्रेयोमन्दिरसंस्तवस्य मुदितो वृत्तिं व्यधादद्भुताम् ॥
कल्याणमंदिरवृत्ति-सौभाग्यमंजरी समाप्ता ॥ इति वृत्तिः॥

[ 1666 ] मू०अन्तः— श्रीकल्याणमंदिरस्तोत्रं महाकविश्रीसिद्धसेनविरचितं संपूर्णं कृतं घोघेराग्रामे। संवत् १७०० वर्षे कार्त्तिकमासे कृष्णपक्षे दशम्यां तिथौ बुद्ध(ध)वासरे लिखितं ऋ० श्री ५ वीरदास-ऋ०श्रीजसाजी-शिष्यमुनिसूजा स्वयं आत्मार्थे ॥

वृ०अन्तः— श्रीमत्तपागणनभोंगणपद्मबंधुर्भाग्याद्भुकब्बरमहीरमणादवाप्ता ।
ख्यातिं जगद्गुरुरिति प्रथितां दधानः सश्रीकहीरविजयाभिधसूरिरासीत् ॥१॥
तत्पट्टे वरगुणमणिगणरोहणभूधरा धरापीठे ।
साप्रतमद्भुतयशसो विजयन्ते विजयसेनसूरिवराः ॥२॥ - गीतिः
वाचकचूडामणयः श्रीमन्तः शान्तिचन्द्रनामानः ।
विद्यागुरवो विबुधा विजयन्तां कमलविजयाश्च ॥३॥
एषां श्रीसुगुरूणां प्रसादतो नयन-बाण-रस-चन्द्रे(१६५२) ।
प्रमिते वर्षे रचिता वृत्तिरियं कनककुशलेन ॥४॥
प्रत्यक्षरं गणनया वृत्तौ संख्या न विद्यते ।
संजाता षट्शती सार्द्धा श्लोकानामिह मङ्गलम् ॥५॥
अंकतो ६५० ससूत्रवृत्तौग्रंथाग्रन्थम् ७२७ ॥
इति श्रीकल्याणमन्दिरवृत्तिः समाप्ता ॥

[ 1670 ] अन्तः— संपूर्णा च सप्रभावश्रीस्तवराजस्य वृत्तिः ॥
जीयासुः श्रीतपगणगगनांगणभासने प्रभाहस्ताः ।
श्रीविजयप्रभभगवत्पादा विलसत्प्रसादार्थाः ॥१॥
तत्साम्राज्ये विजयिनि विजयन्ते कविवराः कृपाविजयाः ।
तच्छिष्यमेघनामाऽलिखत् प्रभोराज्ञया वृत्तिम् ॥२॥

[ 1671 ] आदिः— श्रीमत्पार्श्वजिनं नत्वा बालानां बोधहेतवे ।
कल्याणमन्दिरस्तोत्रव्याख्याऽऽलेशो विधीयते ॥१॥

तत्र प्रथममस्य स्तोत्रस्योत्पत्तिर्लिख्यते । तद्यथा— उज्जयिन्यां विक्रमपुरोधसः पुत्रो देवसिकाकुक्षिभूः मुकुन्द इति नामा वादार्थं भृगुकच्छपुरिं प्रति चलितः ।

**अन्तः**— श्रीमन्नागपुरीयकाह्वयतपागच्छाधिपाः सत्क्रियाः

सूरिश्रीप्रभचन्द्रकीर्त्तिगुरवस्तेषां विनेयो वरः ।
वाच्यः पाठकहर्षकीर्त्तिरकरोत् कल्याणसद्मस्तवे
मेधामन्दिरदेवसुन्दरमहोपाध्यायराजो महान् ॥१॥

यत्किंचिन्मतिमन्दत्वात् यच्चात्रानवधानतः ।
व्याख्यातं वैपरीत्येन तद् विशोध्य विचक्षणैः ॥२॥

इति श्रीशिव(कल्याण)मन्दिरस्तोत्रस्य टीका संपूर्णा ॥ ग्रं० ७०० ॥

[ 1676 ] **मू०अन्तः** — इति श्रीकल्याणमन्दिरनामकं श्रीपार्श्वनाथस्तोत्रं समाप्तिमगात् ।
संवत् स्थाणुदृष्टि-विधि-श्रवणसप्ति-कुमुदबांधव(१७४३)प्रमिते श्रीमति रामपुराभिख्ये नगरे ।

**अव०अन्तः**— श्रीमति बृहत्खरतरगच्छे । भ०श्रीमज्जिनरत्नसूरीन्द्राणां शिष्येण श्रीवर्द्धमानसूरिणा स्वविनेयवा०अमरसोमगणिकृते कृतो लिखितश्चायमर्थः । नभःशुक्लप्रतिपदि सौम्यवारे ।

[ 1680 ] **मू०अन्तः**— इति श्रीकल्याणमन्दिरस्तवः समाप्तः । पं०श्रीक्षि(क्ष)माकीर्त्तिगणिशिष्य–पं०राजकीर्त्तिगणिलिखितम् ॥

**अव०आदिः**— श्रीपार्श्वनाथाय नमः ॥

श्रीपार्श्वजिनमानम्य सर्वज्ञं मोहनाशनम् ।
कल्याणमन्दिरस्तोत्रस्यार्थः कश्चन लिख्यते ॥१॥

तत्रादौ कल्याणमन्दिरस्तवस्योत्पत्तिर्वर्ण्यते । श्रीउज्जयिन्यां श्रीविक्रमस्य पुरोधसः पुत्रो देवसिकाकुक्षिभूः सिद्धि(द्ध)सेनो वादीन्द्रो वादार्थं भृगुकच्छं पुरं गतः । मुकुन्देति पूर्वनामानो वृद्धवादिगुरवः सन्मुखाः गोपसमक्षं वादे संस्कृतं जल्पनमकरोत् । न किंचिदिति गोपैरुक्तम् । गुरवः प्रोचिरे—

नवि मारीइ नवि चोरीइ परदारागमणने वारीइ ।
थोवा थोवं दाईए, इम सरगि टुगि जाइए ॥१॥

कालउ कम्बल नइनी छदट छासिइं भरी उदइ वरपट्ट ।
अइवड पडीउ नीलइ झाडी, अवर किसर गहसींग निलाडी ॥२॥

ग्रन्थान्तरे त्वेवम्–

जहि डूंगर तहिं खोहलइ, जहि मइ तहि वलणाइ ।
जिहिं सुपुरिस तहिं घंघलइ, हीआ विसूरिहि कांइ ॥१॥

जेण कलंतह चिंतियउ, गंठिह बन्धउ दम्म ।
नवि खमणउ नवि सेवडउ गयउ अकत्थउ जम्म ॥२॥

इसु सुत्थिअ देसडउंइ, मइ दुल्ला मु कल्लि ।
अमुणिय जम भउ दडवडइ, पडि इकि अज्ज कि कल्लि ॥३॥ इत्यादि ॥

गोपैरुक्तम्—जितं जितमनेन । एवं वृद्धवादिर्भिजित्य प्राव्राजितः । गुरुदत्तकुमुदचन्द्रनाम्ना श्रीसूरिपदप्राप्तौ पुनः सिद्धसेनदिवाकर इति नाम्ना ख्यातौ गुरुन् जगाद सर्वं सिद्धांतं संस्कृतं करोमि । गुरव ऊचिरे—

बाल-स्त्री-मन्द-मूर्खाणां नृणां चारित्रकांक्षिणाम् ।
अनुग्रहार्थं तत्त्वज्ञैः सिद्धांतः प्राकृतः कृतः ॥१॥

एवं जल्पतस्तव महत् प्रायश्चित्तमापन्नम् । ततो विमृश्य सिद्धो जगौ—अहमाश्रितमौनो द्वादशवार्षिकं पारांचिकं नाम प्रायश्चित्तं गुप्तमुखवस्त्रिकः रजोहरणादिलिंगः प्रकटितावधूतरूपश्चरिष्याम्युपयुक्तः । एवमुक्त्वा ग्रामादिषु भ्रमतः श्रीसिद्धसेनाचार्यस्य १२ वत्सरीयुः । ततः श्रीउज्जयिन्यां महाकालप्रासादे गत्वोपावीक्षत् । देवं कथं न नमस्यसीति लोकैर्जल्पमानोऽपि नाजल्पत्, नत्वो[प]स्थापितोऽप्युत्तस्थौ । एवं च जनपरंपरया तं श्रुत्वा श्रीविक्रमादित्यनृपः समागत्योक्तवान्—कुतस्त्वया देवो न वन्द्यते ? वादिनेदमवादि—मत्प्रणामं न सहते शिवः । राजा जगाद—किमसंभाव्यं ब्रवीषि ? सिद्धः प्राह— एवमेतत् । राजा प्रोचे-तर्हि कुरुष्व प्रणामं, प्रत्ययो दृश्यतो सिद्धः स्माह—राजन् ! निःफलं कार्यं बुधा नैवारभन्ते... ... ... ...

अव०अन्तः— अनेन वृत्ते जिनविशेषणद्वारेण कविना दीक्षासमये गुरुदत्तं कुमुदचन्द्रेति स्वरूपं स्वनाम ज्ञापितं दृष्टव्यमत्र । स्तवनं महाकविरब्धं प्रायः प्रतिवृत्ते मंत्रादयः संभाव्यन्ते । परं ते तथाविधाम्नायाभावान्नाभिहिताः स्वयं तु ते ज्ञातव्याः सुगुरुप्रसादात् ॥४४॥

इति महामन्त्रमयसमहिमश्रीकल्याणमंदिराख्यश्रीपार्श्वनाथस्तववृत्तिः समाप्ता ॥

संवत् १६६७ वर्षे वदि ३ शनौ श्रीद्विवबन्दिरे श्रीअञ्चलगच्छे श्रीधर्ममूर्त्तिसूरिविजयराज्ये पं० राजकीर्त्तिगणि-शिष्यऋषिश्रुतकीर्ति-शिष्यविजयकीर्त्तिवाचनार्थम् ॥

[ 1701 ] अन्तः— इति श्रीकुमुदचन्द्रविरचितकल्याणमन्दिरस्तोत्रं काव्यबन्ध(बद्धं) संपूर्णं भाषा-अर्थ-बालावबोधसहितम् ।

कुमुदचन्द्रकृतै काव्यं बाणारसी भाषा कर्यौं ।
दोनुं देषि विचारी लब्धिशेखर अर्थ जु वर्यौं ॥१॥

चोपाईछन्दः— काव्यग्रन्थ कोई०... ... ... ॥२॥

रतनशेखर गुरु अंचलगच्छिं लब्धिशेखर शिष्य ताकी पच्छि ।
संवत सत्तरसित्तरि (१७७०) वरषें पोस दशमि दिन आनन्द हरषै ॥३॥

इति श्रीकल्याणमन्दिरस्तोत्रार्थः मुनिलब्धिशेखर०स्वार्थे आत्मार्थं संतजनज्ञापनार्थे कृतो लिखिता(तः) । संवत् १७७० पोषदशमीदिने श्रीनगरथट्टामद्धे(ध्ये) श्रीपार्श्वप्र[सा]दात् ।

[ 1731 ] अन्तः— इति श्रीवीरस्तोत्रं समसंस्कृतं संपूर्णम् ।

संवत् १७३३ वर्षे कार्तिककृष्णत्रयोदश्यां वाचनाचार्यश्रीज्ञानसमुद्रगणिनां शिष्यमुख्यपं०श्री ५ श्रीज्ञानविमलगणीनां शिष्यलेशकेन लिखितमिदं सेवधी-श्री ५ श्रीवच्छीयापुत्रिका सुश्राविका पुण्यप्रभाविका रतनकुमरिजीपठनार्थम् ।

[ 1759 ] आदिः— कल्याणमालामणिसंनिधानं श्रीगौतमाद्यैर्मुनिभिः प्रधानम् ।
यशोगुणैः संप्रति वर्द्धमानं स्तवीमि भक्त्या जिनवर्द्धमानम् ॥१॥

अन्तः— एवं कल्याणनिर्वाणकल्याणिकतपोहृमि ।
संस्तुतः पार्श्वचंद्रेण श्रीवीरो दिशतु श्रियम् ॥

इति श्रीमहावीरस्तवनं सारस्वतसंज्ञाधिकारसूत्रसमस्यांकितम् ।

वृ०आदिः— स्तुत्यं सारस्वतं बीजं बीजं सज्ज्ञानसंपदाम् ।
नयाम्यहं स्तुतेर्मार्गे मनोमन्दिरदीपकम् ॥१॥
कविना पार्श्वचंद्रेण वीरस्तोत्रमकारि यत् ।
सारस्वतस्य संज्ञाधिकारसूत्रपदांकितम् ॥२॥
श्रीपूर्णिमागणाधीशः श्रीभावप्रभसूरिराट् ।
कुर्वे तस्याधुना टीकामर्थार्थिशिष्ययाच्ञया ॥३॥

इति श्रीपूर्णिमागच्छीयभट्टारकश्री ५ श्रीभावप्रभसूरिविरचिता श्रीमहावीरस्तोत्रटीका संपूर्णा । संवत् १७९५ मिते भाद्रपदमासे कृष्णपक्षे त्रयोदश्यां तिथौ गुरुवारे ।

[ 1810 ] मू०अन्तः— इत्यनुबन्धफलगर्भा गौतमस्वामिस्तुतिः ॥

संवत् १५१५ वर्षे फा० व० १२ दिने पूज्य पं०मेरुरत्नगणि-शिष्येणाऽलि(ले)खि ॥

अव०अन्तः— इत्यनुबंधफलगर्भगौतमस्तोत्रावचूर्णिः ॥ सं० १५१५ वर्षे फा० व० १३ दिने तपागच्छनायकश्रीसोमसुन्दरसूरि-शिष्यश्रीविशालराजसूरि-शिष्यपं० मेरुरत्नगणि-शिष्यसिद्धांतसुन्दरेणाऽलेखि ॥

[ 1849 ] अन्तः— इति सत्तरिसयस्तोत्रं समाप्तम् ।

संवत् १८३८ वर्षे फाल्गुणमासे शुक्लपक्षे तिथौ नवम्यां रविवारे श्रीविक्रमपुरमध्ये लिष(खि)तं पं०कनीराम चिरं०खुस्यालपठनार्थम् ॥

[ 1850 ] अन्तः— इति श्रीअजितशांतिस्तवनं संपूर्णम् ॥

संवत् १७३७ वर्षे ज्येष्ठसुदिप्रतिपदातिथौ रविवासरे श्रीभाग्यनगरमध्ये पं०श्री ५ श्रीविमलचन्दगणि-मुनिश्रीजयचन्दजीमुनि-श्रीअमरचन्दजीमुनि-श्रीचतुरचन्दजीलिखितम् ॥ सुश्रावकपुन्यप्रभावकदेवगुरुपरमभक्तिकारकसा०जयती दाससा०ऋषभदास-श्राविकाधनोबाईपठनार्थम् ।

[ 1857 ] आदिः— अर्ह ॥ अजितशांतिजिनाभिधयोः स्तवः० ... ...

अन्तः — संवद्विक्रमभूपतेः शर-ऋतुदर्चिः-मृगांके(१३६५)मिते
पौषस्यासितपक्षभाजि शशिना युक्ते द्वितीयातिथौ ।
श्रीमत्श्रीजिनसिंहसूरिसुगुरोः पादाब्जपुष्पंधयः
पुर्यां दाशरथेर्जिनप्रभु(भ)गुरुर्ग्रन्थ टीकामिमाम् ॥४॥

अशुद्धपाठप्रतिषेधनार्थं वृत्तिः स्तवस्यास्य मया व्यधायि ।
इतोऽपि चेत् कस्यचनोपकारः संपत्स्यदाऽपूरितरां पयोजिः(?) ॥५॥

समाप्ता चेयं श्रीमदजितशांतिस्तववृत्तिर्बोधप्रदीपिकानाम कृतिरियं श्रीजिनप्रभसूरीणाम् । ग्रन्थ० ७४० ।

प्रत्यक्षरं निरूप्यास्या [ग्रन्थामानं वि]निश्चितम् ।
अनुष्टुभां सप्तशती चत्वारिंशत्समन्वितम् ॥

संवत् १४६४ वर्षे माहवदिषष्ठीदिने उत्तराफाल्गुनीनक्षत्रे भौमवारे श्रीअजितशांतिस्तववृत्तिम(र)लेखि मन्त्रिकरणा-सुतमंत्रिनरवदेन० ...

[ 1870 ] अन्तः— इति श्रीअजितशांतिस्तववार्त्तिकं लिखितम् ।

संवत् १७६० वर्षे फागुणवदि १० रविवारे लिखितं थंभायतमध्ये ।
श्रीमद्बृहत्तपागच्छेऽजितशांतिस्तवस्य च ।
श्रीसाधुरत्नशिष्येण श्रीपार्श्वचंद्रेण वार्त्तिकम् ॥१॥
चक्रे बालावबोधाय वाचनीयं च हर्षदम् ।
वाच्यमानं चिरं नन्द्यात् तावद् यावज्जिनागमः ॥२॥

ऋषिश्रीरूपजीपठनार्थम् ।

[ 1930 ] आदिः— श्रीपार्श्वं सम्यगानम्य हर्म्यं सकलसंपदाम् ।
वृत्तिर्वितन्यतेऽस्माभिरुपसर्गहरस्तवे ॥१॥
विद्यामन्त्रोद्धाराः पूर्वाचार्यैः प्रदर्शिता येऽस्मिन् ।
ते च चिरन्तनवृत्तेर्ज्ञेयास्तानिह न वक्ष्यामः ॥२॥

अन्तः— उपसर्गहरस्तोत्रे व्याख्या किंचिन्मयाऽरचि ।
यात्र चानौचिती वाच्ये सा शोध्या कृपया बुधैः ॥१॥
वृत्तिः सैषा विशेषोक्तिरोचिष्णुश्चारुचेतनैः ।
अर्थकल्पलता नाम चिरराात्राय चर्च्यताम् ॥२॥
संवद्विक्रमभूपतेः शर-ऋतुदर्चि-मृगांकैर्मिते (१३६५)
पौषस्यासितपक्षभाजि शनिना युते नवम्यां तिथौ ।
शिष्यः श्रीजिनसिंहसूरिसुगुरोर्वृत्तिं व्यदर्भीदिमां
श्रीसाकेतपुरे जिनप्रभ इति ख्यातो मुनीनां प्रभुः ॥३॥

समाप्ता चेयमुपसर्गहरस्तववृत्तिः, कृतिः श्रीजिनप्रभसूरेरिति । ग्रन्थाग्रम् २७१ ॥

[ 1968 ] मू०आदिः— दुरियरयसमीरं मोहपंकोहनीरं० ।

वृ०आदिः— श्रीजिनाय नमः ॥

वर्द्धयतु वर्द्धमानः श्रीसिद्धान्तरुचिवाचकोवाच ।
चित्तचमत्कृतिचतुरं चतुरनराणां वचो यस्य ॥१॥

अन्तः— इति श्रीमहावीरचरित्रटीका समाप्ता ॥ लिखी(पी)कृतं वा०साधुहर्षगणिना ॥

श्रीखरतरगच्छेशश्रीमज्जिनभद्रसूरिशिष्याणाम् ।
श्रीरापल्लेः पार्श्वप्रभुलब्धवरप्रसादानाम् ॥१॥
श्रीग्यासदीनसाहेर्महासभालब्धवादिविजयानाम् ।
श्रीसिद्धान्तरुचिमहोपाध्यायानां विनेयेन ॥२॥
साधुसोमगणीशेनाक्लेशेनार्थप्रबोधिनी ।
श्रीवीरचरिते चक्रे वृत्तिश्चित्तप्रमोदिनी ॥३॥
मतिमन्दान्मोहाद् वा प्रमादतो वात्र किंचनापि मया ।
यत् सूत्रितमुत्सूत्रं तन्मिथ्यादुःकृतं मेस्तु ॥४॥
अत्रानागमिकं युक्तिरिक्तं वा यत् पदं क्वचित् ।
विद्वद्भि[रा]रभि(चि)ता सद्भिस्तच्छोध्यं शुद्धबुद्धिभिः ॥५॥
जिनवल्लभसूरीश्वसूक्तिमौक्तिकपंक्तयः ।
दर्शितार्थाः सुदृष्टिनां सुखग्राह्या भवन्त्विति ॥६॥
भावी(व)चरित्रपंचकवृत्तिविहिता नवैकतिथि(१५१९)वर्षे ।
हर्षे हर्षेण महर्षिगणैः प्रवाच्यमानां चिरं जयतु ॥७॥

इति श्रीवीरचरित्रटीका संपूर्णा ॥

संवत् १७३७ वर्षे मगसिरवदि ७ दिने विभाते लिखित श्रीस्तंभतीर्थमध्ये।

[ 1973 ] मू०आदिः— श्रीगुरुभ्यो नमः

नमितसुरनरालिव्रातपादारविन्दं
विदितसकललोकालोकसद्ज्ञेयवृंदम् ।
सविनयमथ नत्वा वर्द्धमानं जिनेशं
किमपि विरचयेहं तत्त्वतस्यार्थलेशम् ॥१॥

पूर्वं तावच्छ्रीपादलिप्तसूरयोऽनेकयोगसिद्धान्तमहान्तः प्रभावकपुरुषा आसन् । तदन्वये सकलज्ञानविज्ञानविज्ञाः श्रीपुण्यतिलकसूरयो विहरन्तोऽवंतीपुर्यां समेतास्तत्र च श्रीविधिपक्षगच्छाधिराज-सरस्वतीलब्धप्रसादश्रीमन्महेन्द्रसिंहसूरयः संति । तेषां महिमानं सकलनागरिकजननिकरवदनकमलालंकारायमानं श्रुत्वा विद्यामदध्मातचित्ताः श्रीपुण्यतिलकसूरयो वादलिप्सया श्रीगुरुसमीपमागता । उक्तं च भो !

मया सह वादो विधेयः;स्तदौ श्रीगुरुभिरुक्तं किं वृथायासेन वादेन ? प्रयोजनमनुद्दिश्य मन्दधियोपि न प्रवर्तन्ते । तदा श्रीपुण्यतिलकसूरिभिरुक्तं कथं वृथायासः । यो यं जयति स तं शिष्यं करोति(त्वि)त्यावयोः संधा । तदा गुरुभिरंगीकृतं प्रारब्धश्च वादः । श्रीगुरुभिर्मुहूर्तादेव ते जिताः । ततः श्रीपुण्यतिलकसूरयः स्वं धन्यं मन्यमानाः श्रीगुरुन् प्रणम्य संस्तूय च शिष्या जाताः । श्रीगुरुभिरपि तेषां महत्त्वरक्षणार्थं दीक्षां दत्वा शाखाचार्यत्वे स्थापिताः । तत्पूर्वजानां च श्रीपादलिप्तसूरीणां विरचितमिदं वीरजिनस्तोत्रं सप्रभावं बहुयोगसिद्धिसंपन्नं दृष्ट्वा श्रीसप्तस्मरणमहास्तोत्रेषु तृतीयं महास्तोत्रं स्थापितम् । महत्त्वं चास्य स्तोत्रस्यानेकयोगसिद्धिमयत्वेन समहिमत्वेन च ज्ञेयं श्रीउपसर्गहरस्तोत्रवत् । तदन्वये चाद्यापि नवीनशिष्यस्य दीक्षां दत्वा प्रथममिदं स्तोत्रं पाठयंतीति । अस्य प्रथमगाथा—

जयइ नवनलिणकुवलयविअसिअसयवत्तपत्तदलच्छो ।
वीरो गइंद मयगलसुललिअगइ विक्कमो भयवं ॥१॥

मू०अन्तः— अथोपसंहारमाह—

एवं वीरजिणंदो अच्छरगणसंघसंथुओ भयवं ।
पालित्तयमइमहिओ दिसउ खयं सव्वदुरिआणं ॥६॥

अर्थात्— कासद्रहगच्छीयपादलिप्तसूरिकृतमेतत् स्तोत्रमित्यर्थः ॥

विधिपक्षगणाधीशाः सूरयो भूरिसद्गुणाः ।
श्रीअमरसागराख्याः विचरन्ति महीतले ॥१॥

तत्पक्षद्योतकाः श्रीमद्दयासागरवाचकाः ।
सच्चारित्रगुणोपेता ज्ञानविज्ञानपेशलाः ॥२॥

तेषां प्रसादमासाद्य पुण्यसागरवाचकैः ।
महावीरस्तवस्येयं टीका विरचिता शुभा ॥३॥

नन्दाग्नि–मुनि–भूसंख्ये(१७३९)वर्षे मास्याश्विने सिते ।
पक्षे दशम्यां वारेर्के बुरहानपुरे पुरे ॥४॥

इति श्रीमहावीरस्तवस्यावचूरिः ॥

[ 2004 ] अन्तः—एवं नुतश्चरमतीर्थपतिर्नयेन ँधारबंदिरनिवास[– –]रत्नम् ।
आनन्दपूर्वविजयाभिधकोविदस्य शिष्येण मेरुविजयेन शिवाय भूयात् ॥ १९ ॥
इति गंधारबन्दिरस्तवनं संपूर्णम् ॥

[ 2030 ] अन्तः— इति श्रीमहेन्द्रप्रभसूरिकृता जीरिकापल्लीपार्श्वनाथस्तवावचूरिः संपूर्णा ॥
वाचकोत्तमवाचकचक्रचूडामणिवा०श्री७श्रीमानचन्द्रजीगणि-शिष्यप्रवरप्रधानमुनिश्रीकल्याणचन्द्रजीगणि–तदंतेवासी(वासि) मुनिभक्तिचन्द्र–शिष्यमुनिसौभागचन्द्रगणिलिखितं श्रीसाभराईनगरे चिरं खुस्यालचन्द्रपठनार्थम् ।

[2155] मू०आदिः— श्रीवीतरागाय नमः ॥

श्रीवर्द्धमानः मांगल्यप्रदीपः पीवरद्युतिः ।
देयादतुलकल्याणविलासं विपुलं सताम् ॥१॥

स्त०अन्तः— अर्हं नत्वाऽल्पबुद्धीनां बोधाय जनभाषया ।
कुर्वे दीपालिकापर्वकल्पव्याख्यानमादारात् ॥१॥

मू०अन्तः— संवत्सरेऽग्नि–द्विप–विश्व(१४८३)संमिते दीपालिकाकल्पममुं विनिर्ममे ।
तपागणाधीश्वरसोमसुन्दरश्रीसूरिशिष्यो जिनसुन्दराह्वयः ॥२८॥

दीपालीपर्वकल्पोयं वाच्यमानः सुधीजनैः ।
जीयाज्जयश्रियो हेतुराचन्द्रार्कं जगत्त्रये ॥२९॥

इति श्रीतपागच्छाधिराजश्रीसोमसुन्दर–शिष्यभट्टारकप्रभुश्रीजिनसुन्दरसूरि-विनिर्मितायां इति श्रीदीपोत्सवकथानकं संपूर्णम् ।

स्त०अन्तः— श्रीज्ञानविमलसूरीश्वरप्रसादात् सुखावबोधार्थम् ।
श्रीदीपोत्सवकल्पस्ति(स्त)बुकार्थः समर्थितो मयका ॥१॥
कविदीपदीपसागरशिशुना सुखसागरेण सन्मतिना ।
गुण–रस–मुनि–विधुमाने(१७६३)वर्षे श्रीराजनगरनगरे ॥२॥
संशोध्यं खलु चैतत् प्राकृतभाष्यं तथापि बुद्धिधनैः ।
यस्मादुपकृतिनिपुणास्संतः संतीति कल्याणम् ॥३॥

सद्ध्यानोज्ज्वलदीपकः प्रविलसत्स्वाध्यायमे(मा)रात्रिकः
शुद्धाहारसुभोजमः सुगुणवाक् तांबूलशोभाशुभः ।
अन्तःनिर्गमलक्ष्म्युपागमजयज्येष्ठाम्बुनामोत्तरः
शीलालंकृतभाग् मुदे भवतु अ[यो]र्हद्धर्म्मदीपोत्सवः ॥४॥

इति अंतर्गतदीपोत्सवः ॥

द्वादशशतप्रमाणं ग्रन्थाग्रं प्रायशोस्य संजातम् ।
वाच्यं दिनत्रयेण श्रीवीरचरित्रमिदमखिलम् ॥१॥

कविरविशिविजयबुधस्याभ्यर्थनया कृतोप्ययं यत्नः ।
विबुधजनैर्वाच्यमानः सुदशां सम्यक्त्वदो भवतु ॥

इति श्रीसूत्रतः टबावलीतः दीपालिकाकल्पः संपूर्णः ॥

संवत् १७८७ वर्षे शाके १६५२ प्रवर्त्तमाने फाल्गुनमासे शुक्लपक्षे त्रयोदश्यां तिथौ श्रीमति अणहिल्लपत्तने ढंढेरपाटके कृतचातुर्म्मासकैः श्रीपूर्णिमापक्षीय-प्रधानशाखीयभट्टारकश्रीभावप्रभसूरिभिः पं०श्रीलालजी-पं०श्रीहेमचन्द–पं०श्रीतेज-सीगुरुभ्रातृशोभितैः शिष्यजोइतादास-प्रयागजी-भाणजीप्रमुखसेवितचरणकमलैरिदं श्रीदीपालिकाकल्पपुस्तकं सूत्रं स्तबुकार्थमयं शोधितम् । पुनर्लिखितं तु प्रयागजीनाम्ना

शिष्येण निर्विघ्नं संपूर्णं जातं श्रीकंटेरकमहावीरजिनप्रसादात् प्रौढमूर्तिश्रीश्याम-लजीनामपार्श्वनाथप्रसादात् । सप्रभावश्रीकलिकुंडनामपार्श्वनाथप्रसादाच्च वाच्यमानं श्रेयोस्तु । श्रीमच्चतुर्विधसंघः सदा जीयात् । कल्याणमस्तु ।

इति श्रीदीवालीकल्पः संपूर्णः ॥

संवत् १८६७ ना वर्षे मागसिरवदि ५ थी(दि)ने लषी(लिखि)तं पं० श्री १००८ ध्यानविजयगणी तत्शिष्य १०८ श्रीपं०ललितविजयगणी–सिष्यसुभ-विजयलषीतं सुत्रात् ॥

[ 2158 ] मू०अन्तः— इति श्रीवीरचरित्रकल्पदीपालीकल्पः संपूर्णः लिखितः ॥

इति श्रीवीरपाटे भट्टारकश्री(५)१०८श्री५विजयदेवसूरीश्वरचरणसेवक-उपाध्यायश्रीरत्नविजयगणि–चरणसेवकपं०श्री१९श्रीखिमाविजयगणीना सुशिष्य श्री११श्रीनेमविजयगणीना चरणकमल सदाइं सेवितसेवक पं०ज्ञानविजयगणी पं०-नांनासवाईपं०श्रीनेमविजयग०सत्कपं०ध्यानविजयगणीलषितं पाटणमध्ये संवत् १८१२ ना वर्षे मासोत्तममासे श्रीमाहमासे कृष्णपक्षे तृ(त्री)ज(३) दिने बुधवासरे श्री ॥

स्त०अन्तः— श्री १०८ श्रीश्रीमहोपाध्यायश्रीलावण्यविजयगणीना सिष्य श्रीश्री-उपाध्यायश्री१९श्रीरत्नविजयगणीना सुशिष्य पं०श्रीखिमाविजयगणिना सिष्य पं०श्री११पं०श्रीनेमविजयगणीना सिष्य पं०श्रीज्ञानविजयगणीलषितं पाटणमध्ये संवत् १८१२ ना वर्षे मासोत्तममासे श्रीमहामासे कृष्णपक्षे १४ दिने रविवासरे दीवालीकल्पः संपूर्णः श्रीः ॥

मू०अन्तः— श्रीमत्तपगणगगनांगणमणिविजयसेनसूरीणाम् ।
शिष्याणुना कथेयं विनिर्मिता कनककुशलेन ॥ ५० ॥
बुधपद्मविजयगणिभिः प्रवरैर्भीमादिविजयगणिभिश्च ।
संशोधिता कथेयं भूतेषु–रसेन्दु(१६५५)मितवर्षे ॥ ५१ ॥
गणिविजयसुन्दराणामभ्यर्थनया कृता कथा मयका ।
प्रथमादर्शे लिखिता तैरेव च मेडतानगरे ॥ १५२ ॥

इति श्रीकार्त्तिके सौभाग्यपञ्चमीमाहात्म्यविषये वरदत्तगुणमंजरीकथानकं संपूर्णम् ॥ पं०श्रीश्री १९ श्रीनेमविजयगणि–शिष्यपं०ध्यानजीलषितम् ॥

स्त०अन्तः— श्रेयना करणहारः तपगच्छरूप आकाशनिइ विषइं गुणनो भण्डारः बुद्धिनो अंबार सुर्यनइं समान श्रीविजयसेनसूरी(री)श्वर प्रतपइं छइं तेहोना शिष्योनइं अर्थे ए कथा पंचमीनी उपगारनइं अर्थे निपजावि जोडी ग्रन्थमांहिथी अधिकार जोईनइं कनककुसलकवेना । १५० । तेहोना शिष्यपंडितपद्मविजयगणिना सुम-तिवंत एहिवा शीष्य भीमविजयगणियें वर्णवी सोधी ए कथाप्रति ॥ संवत्

१६५५ ना वर्षे ग्रन्थमांहिथी जोईनइं जूदी कथा करी छ॑ । १५१। वाणि-विजयसुन्दरइं पोतानइं अर्थे कथा करी मइं प्रथम पैलां ए कथा ऋषि मेडतानगरनइं विषइं । १५२ ॥

इति कात्तिकपंचमीनइं विषइ गुणमंजरी–वरवरदत्तकथानकं संपूर्ण पाटणमधे महोपाध्यायश्री १०८ श्रीरत्नविजयगणिना चरणयुक्त पं०श्री१९श्री-षिमाविजयगणी–चरणसेवक पं०श्रीनेमविजयगणीना परमसिष्य पं०ज्ञानविजय-गणीलषितम् ॥

**मू०अन्तः—** षट्-सप्त-पंचैकसंवत्(१५७६)विक्रमे निर्मिता कथा ।
सौभाग्यनन्दीसुरि(सुरीं)न्द्रैर्ह्मीरपुरसंस्थिते ॥ १७ ॥ इति

संवत्त गो-निधि–काश्यपीसुसीसमृत्संख्यायुते वत्सरे
श्रीमन्मार्गसितेतरे शुभतिथौ षष्ठी गुरां वासरे ।
संक्षेप तनुते सुराजनगरे चाभाषणैकादशी–
पर्वैसु धिया टबार्थमलिखित् सौभाग्यचन्द्रो मुनिः १ ॥

इति श्रीमौनएकादशीकथा संपूर्णम् । सुप्रसादं विधायायं सोधनीयं विचक्षणैः ॥ ११श्रीपं०श्रीनेमविजयगणीना सीष्य पण्डितश्रीन्यानविजयगणीलषितं पाटणमध्ये संवत् १८११ वर्षे ॥

[ 2169 ] **अन्तः—** पुरा श्रीजिनप्रभसूरिभिः प्रतिदिनमवस्तवनिर्माणपुरस्सरनिर्वद्याहारग्रहणा-भिग्रहवद्‌भिः प्रत्यक्षपद्मावतीदेवीवचसाऽभ्युदयिनं श्रीतपागच्छं विभावयतां श्रीसोमतिलकसूरीणां स्वशैक्ष-शिष्यादिपठनविलोकनाद्यर्थं यमक-श्लेष-चित्र–छन्दोविशेषादिनवनवभङ्गीसुभगाः सप्तशतीमिताः स्तवा उपदीकृताः निज-नामांकितास्तेष्वयं सर्वसिद्धांतस्तवो बहूपयोगित्वाद् विव्रियते ॥

नत्वा० ॥ गुरुभ्यः श्रुतदेवतायै सरस्वत्यै०... ... ...

**मू०अन्तः—** इति भगवत सिद्धांतस्य प्रसिद्धफलप्रथां
गुणगणकथां कण्ठे कुर्याज्जिनप्रभवस्य यः ।
वितरति[त]रां तस्मै तोषाद् वरं श्रुतदेवता
स्पृहयति च सा मुक्तिश्रीस्तत्समागमनोत्सवम् ॥४६॥

इति श्रीसिद्धस्तवः ।

**मू०अन्तः –** अत्र पूर्वार्द्धे जिनप्रभवस्येतिसिद्धान्तविशेषणेन कविरौद्धत्यपरिहाराय गुप्तं जिनप्रभेति स्वनामाभिहितवान् ॥ ४६ ॥ इति ॥

आदिगुप्ताभिधानस्य गुरोः पादप्रसादतः ।
पदविच्छेदरूपेयं विवृतिर्लिखिता मि[ता] ॥ १ ॥

इति श्रीसिद्धान्तस्तवावचूर्णिः समाप्ता ॥

[ 2185 ] **आदिः—** ॥ ॐ ॥ श्रीवर्द्धमानाय नमः ॥

पणमिय··········वीरं वोच्छंतस्सेवयसिद्धिगमपवि०

**अन्तः**— समातोऽयं श्रीअपापाबृहत्कल्पो दीपोत्सवः कल्पो वा ॥ ग्रन्थाग्रम् ३९५॥

संवत् १६६५ वर्षे वैशाखसुदि ६ शनौ ···· खानगरमध्ये श्रीअंचल-गच्छेशश्रीधर्म्ममूर्त्तिसूरिविजयराज्ये पण्डितश्रीक्षिमाकीर्त्तिगणि–शिष्य······कीर्त्ति-गणिलिषितम् ॥ पं०श्रीजयवन्तगणि–शिष्यऋषिश्रीकुलकीर्त्तिगणि–तत्शिष्य-ऋषिमुनिकीर्ति··· ··· ॥

[ 2192 ] **मू०अन्तः**— सारावलीपयन्नगगाहाओ सूरिभद्दभणियाओ ।
जो पढई गुणई निसुणई सो लहइ सेत्तुज्जजत्तफलम् ॥ २५ ॥

इति श्रीशेत्रू(शत्रुं)जयतीर्थकल्पः संपूर्णः ॥

संवत् १९२३ न वर्षे पोसवद ९ दिनें लषुं छें । लषितं खेमचन्द राजनगरमध्ये लषुं छें ॥

**स्त०अन्तः**— इति श्रीसेत्रु(शत्रुं)जयतीर्थकल्पटबाऽर्थ संपूर्ण लख्यो छे । लखावितं गरणीजीजीवसरीजी तथा नवलसरीजी तथा जडावसरीजी परत लखावी छें । सांमीनारणना वासमां लखुं छें ॥ श्लोक ७५ ॥

[ 2233 ] **आदिः**— पण्डितश्री ५ श्रीमानविजयगणिगुरुभ्यो नमः ॥
अर्हन्नामापि कर्णाभ्यां शृण्वन् वाचा समुच्चरन् ।
जीवः पीवरपुण्यश्रीर्लभते फलमुत्तमम् ॥ १ ॥

**अन्तः**— एतदष्टोत्तरं नाम सहस्रं श्रीमदर्हतः ।
भव्या पठंतु सानन्दमहानन्दैककारणम् ॥ १३ ॥

इति श्रीअर्हन्नामसहस्रसमुच्चये दशमशतप्रकाशः ॥१०॥

इति श्रीमदर्हतः सहस्रनामानि । महोपाध्यायश्रीदेवविजयगणिशिष्य–पं०-श्रीमानविजयगणि–शिष्यगणिश्रीप्रीतिविजयलिखितम् ॥

[ 2244 ] **आदिः**— सिद्धार्थजातो भगवान् जगच्चक्षुः श्रियेस्तु वः ।
पन्था प्रकाश(श्य)ते वीप्रैर्यद् गवां निवहैः शिवः ॥ १ ॥

**अन्तः**— मुनि–युग–नरपति(१६४७)संख्ये वर्षे श्रीहीरविजयसूरीणाम् ।
वचनेन हेमविजयो रविनाम्नां संग्रहं विदधे ॥ १८ ॥

इति सूर्यसहस्रनामसंग्रहे दशमः प्रकाशः ॥
पण्डितहेमविजयगणिविरचिता सूर्यनामकामधेनुः संपूर्णा ॥

[ 2250 ] **मू०आदिः**— श्रीमहिमाप्रभसूरिगुरुभ्यो नमः ॥
सकलनिर्मलमण्डलकौमुदीपतिसमानमुखो यतीनां पतिः ।
विजयते जयते तसु(व) सेवकः सुमहिमा महिमाप्रभसूरिराट् ॥ १ ॥

अन्तः— गुरोः कृतस्य भावतः प्रमेण सूरिणा सतः ।
स्तवस्य पाठतः प्रगे सुखानि सन्तु सत्सताम् ॥ ८ ॥

इति श्रीसद्गुरुश्रीमहिमाप्रभसूरिस्तुत्यष्टकं संपूर्णम् ।
शुभं भवतु । संवत् १७८३ वर्षे ज्येष्ठ सुदि ३ शुक्रे लिखितम् ॥

अव० आदिः— प्रणम्य परमज्योतिर्महिमाप्रभसंभवम् ।
करोम्यस्य स्तवस्यार्थं श्रीभावप्रभसूरिराट् ॥ १ ॥

सकलेति-महिमाप्रभसूरिराट् श्रीमहिमाप्रभनामा सूरिराजः आचार्यः स्वामी विजयते० ... ...

अव०अन्तः— अथ प्रमाणिकाछन्दः । सा प्राह प्रगे प्रभाते गुरोः श्रीसूरेः स्तवस्य पाठतः भणनात् सत् निरन्तरं सतां सज्जनानां सुखानि सन्तु भवन्तु इत्याशीर्वचःकथनं स्तुस्त्यष्टकान्ते मांगल(ल्य)हेतुत्वात् । कथंभूतस्य स्तवस्य भावतः प्रमेण भावशब्दात् अग्रे प्रभयोजनेन भावप्रमेण नाम्ना सूरिणा आचार्येण कृतस्य वचनरचनागुम्फितस्य अथवा प्रमेण उत्कृष्टकांतिना एवंविधेन सूरिणा पण्डितेन अथवा आचार्येण भावतः निजमनोरसिकत्वेन कृतस्य भावत इति पदेन न तु कस्यचित् प्रेरकस्य बलात् किन्तु निजगुरौ भक्तिरागातिशयत्वादिति । पुनः कथंभूतस्य स्तवस्य सतः शोभनस्य ॥८॥

इति श्रीस्वोपज्ञश्रीमहिमाप्रभसूरिस्तुत्यष्ट[क]स्य विवरणं श्रीभावप्रभसूरिकृतं संपूर्णं शिष्य-प्रशिष्याणां पठन-पाठनहेतवे ॥ श्रीः ॥

[ 2255 ] आदिः— प्रणम्य भक्त्या ऋषभं जिनोत्तमं सम्यक् नमस्कृत्य गजाननं गुरुम् ।
वास्तुप्रतिष्ठादिविचारमध्याद् देवप्रतिष्ठादिस्रजं करोमि ॥ १ ॥

स्वे(श्वे)ताबराशांबरशिल्पशास्त्रे पृथक् पृथग्मान्यमतांतरं महत् ।
सम्यग्धियालोक्य समग्रशास्त्राद् विरच्यते देवनिधानम्मला(माला) ॥ २ ॥

प्रतिष्ठाविधाने तथा शुभस्थाने प्रासादार्चने सद्मनि देवस्थाप्ये ।
व्रतोद्यापने तथोत्पातकाच्च च सदा शांतिकर्म्म प्रशस्तं विधेयम् ॥ ३ ॥

वाप्याराम-तडाग-कूप-भुवनारंभप्रतिष्ठाव्रता-
रंभाचार्यनृपाभिषेकसमये कुर्यात् सुरस्थापनम् ।
दुष्टोत्पातकराजविग्रहगते विद्युच्च निर्घोषके
यात्रासंकटकाकसंगमगते स्यात् शांतिकर्म विदुः ॥ ४ ॥

श्रीमदमरविजयाख्यः सस्नेहं उत्तमं प्रति ।
इत्येवं कथयामास प्रतिष्ठाकल्पः क्रियताम् ॥ ५ ॥

तथैवं नरविजयेन सादरं कथितं मम ।
सुबोधं तु सुरम्य च पूजाविधिः विरच्यताम् ॥ ६ ॥

हैमाचार्यैः कृतं कियत् कियत् समयसुन्दरैः ।
तदनुग्रहात् प्रवक्ष्यामि सूचिदवरकयोरिव ॥ ७ ॥

न्यूनाष्टवर्षमात्रं स्यात् तथा पक्षप्रमाणकम् ।
विशेषमासमेकं तु उत्कृष्टं सार्द्धमासकम् ॥ ८ ॥

तेषां दिने दिने किं स्यात् किं कुर्याद् विधिपूर्वकम् ।
केन केन प्रकारेण पूजाविधिः विरच्यताम् ॥ ९ ॥

इति पूज्यवचः श्रुत्वा कृत्वा शास्त्रावलोकनम् ।
सम्यग्ज्ञानावबोधाय प्रतिष्ठाकल्प उच्यते ॥ १० ॥

[2257] **आदिः**— प्रणम्य श्रीमहावीरं लब्धसामग्रीसंयुतम् ।
जिनबिंबस्य प्रतिष्ठापूजां वक्ष्ये विधानतः ॥ १ ॥

विनीतो बुद्धिमान् दाता न्यायोपात्तधनो महान् ।
शीलादिगुणसंपन्नो श्राद्धो ह्यत्र प्रशस्यते ॥ २ ॥

देशकालादिभावज्ञो निर्ममः शुद्धमानसः ।
श्रद्धात्वादिगुणोपेतो पृच्छकः सोऽत्र शस्यते ॥ ३ ॥

इति श्राद्धलक्षणम् ।

दर्शन-ज्ञान-चारित्रैः संयुतो ममतातिगः ।
प्राज्ञप्रश्नज्ञः सस्नात्रो गुरुः स्यात् शांतिनिष्ठितः ॥ ४ ॥

इति आचार्यलक्षणम् ॥

**अन्तः**— एते प्रतिष्ठास्थापनान्तरं गुण्यंते पश्चादष्टाह्निकामहोत्सवः कार्यः । इति श्रीभद्रबाहुस्वामिना विद्याप्रवादपूर्वात् प्रतिष्ठाकल्प उद्धृतः तन्मध्यात् जगच्चंद्रसूरीश्वरेण यत्प्रतिष्ठाकल्पः भट्टारकश्रीहरिभद्रसूरिकृतप्रतिष्ठाकल्पः हेमाचार्यकृतप्रतिष्ठाकल्पः श्यामाचार्यकृतप्रतिष्ठाकल्पः भट्टारकगुणरत्नाकरसूरिकृतप्रतिष्ठाकल्पः— एभिः प्रतिष्ठाकल्पैः सह संयोजितः संशोधितश्च । भ०श्रीविजयदानसूरीश्वराग्रे वाचकसकलचन्द्रगणिविरचितः प्रतिष्ठाकल्पः समाप्तः ।

श्रीविक्रमसंवत् २००९ ना फाल्गुनकृष्णचतुर्थी बुधवासरे श्रीमदण-हिल्लपुरपत्तनवास्तव्यश्रीमालीविप्रज्ञातीयश्रीलक्ष्मीशंकरात्मजगोवर्धनदासत्रिवेदिनेदं पुस्तकं लिपीकृतम् ।

[2265] **अन्तः**— सं० १५०९ वर्षे आसो शुदि १० शनौ श्रीमहीशानपुरे श्रीपूर्णिमापक्षे श्रीगुणसमुद्रसूरीणां शिष्यपं०गुणप्रभगणिना लिखिता प्रतिष्ठाविधिः ।

[2271] **आदिः**— अथ व्याख्यं प्रविक्षा(वक्ष्या)मि गृहबिंबस्य लक्षणम् ।
एकांगुलं भवे चापि पंच सप्तांगुलं शुभम् ॥१॥

**अन्तः**— इति पूजाविधिः ॥

लिखिता संवत् १६१२ वर्षे तपागच्छे भट्टारकप्रभुश्रीविजयदानसूरि-तत्पट्टे भट्टारकश्रीहीरविजयसूरि-तत्शिष्यपं०श्रीविशालरत्नग०-तत्शिष्यगणि-[illegible]लिखितं स्वपरोपकाराय ॥

[ 2278 ] **आदिः—** अर्हं नमः ॥

प्रणम्य श्रीजिनान् सर्वान् सर्वातिशयसस्मितान् ।
**स्नात्र**पंचाशिकां वक्ष्ये भव्यानां बोधहेतवे ॥ १ ॥

**अन्तः—** ततः स्तोत्रैर्वरैर्भावपूजां कुर्वन् महीपतिः ।
अर्जयामास तीर्थेशगोत्रं मुक्तिसुखप्रदम् ॥ ७ ॥

इति पूजायां श्रेणिकभूपकथा ॥ ५१ ॥

इति श्रीजिनेंद्रपूजाविषये पं० शुभशीलविरचिता **स्नात्रपंचाशिका** समाप्ता । ग्रन्थाग्रम् ४२१ ॥

संवत् १५५५ वर्षे अश्विनि मासे सितपक्षे त्रयोदश्यां तिथौ गुरुवासरे सुरत्राणश्रीमाहेमूदविजयराज्ये श्रीश्रीपूर्णिमागणांभोधितुहिनकराणां प्रभुश्रीपूज्य-परमगुरुभ०श्रीश्रीभुवनप्रभसूरीणां विनेयेन मुनिना वीरकलशेन भिल्लकुट्टनगरे चातुर्मासिकसंस्थेन स्वपठनार्थं लिखितमदः ॥

[ 2280 ] **अन्तः—** इति श्रीजिनेंद्रपूजाविषये श्रीतपागच्छाधिराजश्रीसोमसुन्दरसूरिशिष्यप०शुभ-शीलगणिविरचिता **स्नात्र**पंचाशिका समाप्ता ॥ ग्रंथाग्रम् ४३१ सर्वसंख्यया । लिखिता पण्डितोत्तमपं०श्रीविशालसौभाग्यगणि-तच्छिष्यपण्डितचक्रचूडामणिपण्डित-श्रीशङ्करसौभाग्यगणि–तच्छिष्येण उदयसौभाग्यगणिना स्वपरोपगा(का)राय च ॥ संवत् १६७२ वर्षे आषाढमासे शुक्लपक्षे एकादश्याम् ।

[ 2282 ] **अन्तः—** इति श्रीजिनेंद्रपूजाविषये श्रीविधिपक्ष्य(क्ष)गच्छाधिराजपूज्यभट्टारकः श्री१०८ श्रीउदयसागरसूरीश्वरविरचितायां श्रीस्नात्रपंचाशिकायां नामा ग्रंथः समाप्तः ॥

जयति भुवनैकसूरः सर्वत्र विहितकेवलालोकः ।
नित्योदयः स्थिरस्तापवर्जितो वर्द्धमानजिनः ॥ १ ॥

श्रीवीरवक्त्रात् त्रिपदीमवाप्य यो द्वादशांगीं विमलां चकार ।
स्वामी सुधर्मा सकलर्षिशास्ता जीयात् स्वकीयं वयवृद्धिकर्त्ता ॥ २ ॥

चांद्रे कुले श्रीविधिपक्षगच्छस्तत्राभवत् साधुपधर्ममूर्त्तिः ।
तदीयपट्टे शिवसिंधुसूरिस्तत्स्थानके श्रीअब्धिसूरयः(रिः) ॥ ३ ॥

तत्पट्टांबुजभास्करा मृशधियो दुर्वादिदंतावलाः
हर्यक्षा उपकेशवंशजनुषो रोषादिदोषद्विषः ।
निर्णीतागमशष्ट(स्त)शास्त्रविषया उद्योगिनोऽध्यापने ।
विद्यासागरसूरयो युगवरा विश्वप्रियाः स्वर्ययुः ॥ ४ ॥

तत्पदांभोजमधुपः सूरिः श्रीउदयोदधिः ।
**स्नात्र**पंचाशिकाग्रन्थं रचयामास हर्षतः ॥ ५ ॥

वर्षेऽब्धिखाद्रींदुमिते(१८०४) सुरम्ये श्रीपोषमासे धवलपक्षे ।
श्रीपूर्णिमायां शशिवासरे च श्रीपादलिप्ताख्यपुरे सुराष्ट्रे ॥ ६ ॥

प्रत्यक्षरगणनया ग्रंथमानं विनिश्चितम् ।
अनुष्टुभां त्रयोदशशतीसंख्यमुदीरितम् ॥ ७ ॥
श्रीयोगविमलसाधोस्तथा श्रीदर्शनाबुधेः ।
अभ्यर्थना(नया) रचितो ग्रंथोयं बोधिलब्धये ॥ ८ ॥
श्रीमालिवंशे गुरुदेवभक्तः कीकासुतः सा० कुंवराभिधानः ।
तदीयसंघेन समं च यात्रां कुर्वन् कृतोयं जिनराजभक्त्यै ॥ ९ ॥
यावल्लवणसमुद्रो० ॥ १० ॥ अर्हंतो मङ्गलं मे स्युः ॥ ११ ॥

इति प्रशस्तिः समाप्ता ।

संवत् १८१५ ना वर्षे फाल्गुणमासे कृष्णपक्षे द्वितीयादिने गुरौ वासरे लिखितं श्रीखडावलीमध्ये ॥

[ 2308 ] **आदिः**— अंगुष्ठे जापः मोक्षाय उपचारे तु तर्जनी ।
मध्यमा धनसौख्याय कुर्यादनामिका शांतिम् ॥१॥

**अन्तः**— इति जापफलम् ॥

संवत् १८४५ रा कार्तिकसुदि १५ गुरौ श्रीमेदपाटदेसे(शे) वणेडा-नगरमध्ये लिषतं खरतरगच्छे । वा० कुशलसौभाग्यगणिभावचरित्रीया भीमा-हेतवे ॥

[ 2310 ] **अन्तः**— श्रीजयचन्द्रगुरुभिरतिप्रतिक्रमणविधिर्यथागमम् ।
लिखितस्तत्रोत्सूत्रं यन्मिथ्यादुष्कृतं तस्य ॥ २ ॥

इति किंचित्हेतुगर्भप्रतिक्रमणक्रमविधिः समाप्तः ॥

श्रीपरमगुरुश्रीतपागच्छनायकश्रीजयचन्द्रसूरिकृतः एवं श्रीयुतसोमसुन्दर-गुरुश्रीपट्टपूर्वाचलादित्यैः श्रीजयचन्द्रसूरिगुरुभिः श्रीमत्तपागच्छपैः किंचिद्धेतुमय-प्रतिक्रमणविधिः वर्षे रस-द्यो-तिथि(१५०६)संख्ये दक्षजनप्रबोधविधये कृतश्चिरम् ।

[ 2319 ] **अन्तः**— श्रीमद्विक्रमसंवति बाण-रस-भ्रमरचरण-शशि(१६६५)संख्ये ।
श्रीअमरसरसि नगरे चैत्रदशम्यां च शुक्लायाः ॥१॥
श्रीजिनचन्द्रगणाधिपशिष्याग्नि(ग्र)सकलचन्द्रगणिशिष्य[ : ] ।
कुरुते स्म समयसुन्दर इमां चतुर्मासिकव्याख्याम् ॥२॥
इति चतुर्मासिकपर्वव्याख्यानपद्धतिः समाप्तीकृता समयसुन्दरेण ।

अतिचाराः- ५संलेखनाया अतिचाराः, १५ कर्मादानानां अतिचाराः, ८ ज्ञानस्य अतिचाराः, दर्शनस्य अतिचाराः ८ चारित्रस्य, तपस्य(सः) १२ अतिचाराः, वीर्यत्रिकस्य ३ अतिचाराः, सम्यक्त्वस्य ५ अतिचाराः,-अतिचाराः ६० द्वादशव्रतानां सर्वेऽपि संख्यामीलने १२४ श्रावक-श्राविकाणामतीचाराः समाप्तम्(प्ताः) ॥

संवत् १७५५ लिखितम् ।

[ 2323 ] अन्तः— षट्-सप्त-पञ्चैक वर्षे(१५७६)विक्रमे निर्मिता कथा ।
सौभाग्यनन्दिसूरीन्द्रैर्मन्दीरपुरसंस्थितैः ॥ १ ॥ इति ॥
संवत् गोनिधिनागशशीसुलीस(शशि)पूतसंख्यायुते वत्सरे
श्रीमन्मार्गसितेतरे शुभतिथौ षष्ठीगुरौ वासरे ॥
संक्षेपं तनुजा(यात्) सुराजनगरे चाभावणैकादशी-
पर्वेषु प्रिया टबार्थमलिखित् सौभाग्यचंद्रो मुनिः ॥ १ ॥

इति श्रीमौनएकादशीकथा संपूर्णन्(र्णा) सुप्रसादं विधायेयं सो(शो)धनीया विचक्षणे(णैः) श्रीपं०श्रीनेमविजयगणीनां सी(शि)ष्यपं०श्रीम्या(ज्ञा)-नविजयगणीलषी(लिखि)तं पाटणमध्ये संवत् १८२२ वर्षे ।

[ 2326 ] आदिः— ऐं नमः ॥ श्रीमहिमाप्रभसूरिभ्यो नमः ॥
नत्वा पार्श्वजिनेशाय श्रीभावप्रभसूरिणा ।
सत्फाल्गुनचतुर्मासव्याख्यानं क्रियते स्फुटम् ॥ १ ॥

अन्तः— इति गुरुप्रशस्तिमाह—
अणहिल्लाभिधे रम्ये पत्तने पुण्यतास्पदे ।
ढंढेरपाटके हृद्ये निष्पापवसतौ स्थिताः ॥ १ ॥
सत्पक्षे पूर्णिमापक्षे गच्छे गौरवसंश्रिताः ।
वादीशाः समजायन्त श्रीविद्याप्रभसूरयः ॥ २ ॥
तत्पट्टभूषणं श्रीमल्ललितप्रभसूरयः ।
ललितं वचनं येषां पीत्वा को न मुदं दधौ ॥ ३ ॥
तत्पट्टतोयजादित्यो विनयप्रभसूरिराट् ।
विनेतुं जन्तुकर्माणि देशनायोद्यतोऽभवत् ॥ ४ ॥
तत्पट्टमण्डनं श्रीमन्महिमाप्रभसूरयः ।
जज्ञिरे महिमा येषामद्भुतः केन वर्ण्यते ? ॥ ५ ॥
तत्पट्टभृद् यथाबुद्धि श्रीभावप्रभसूरिराट् ।
कृतवानिदमाख्यानं श्रोतॄणामिष्टसिद्धये ॥ ६ ॥
द्वयष्टाश्व-भूमिते(१७८२) वर्षे ज्येष्ठाद्यशुक्लपक्षके ।
पंचम्यां भूमिभूवारे पूर्णतामिदमाप्तवान् ॥ ७ ॥
इति श्रीफाल्गुनचतुर्मासकव्याख्यानं संपूर्णम् ।

[ 2329 ] अन्तः-- वर्षेक-कर-हस्त्यब्जसंख्ये (१८२१) श्रीजेसलाद् गिरौ ।
श्रीमत्खरतरेशाश्च श्रीजिनाद्विजयाभिधा ॥ १ ॥
तच्छिष्याः पाठकाः ख्याताः रंगशीला मया कृताः ।
तच्छिष्यश्रीमराजेन व्याख्येयं भव्यहेतवे ॥ २ ॥
इति चैत्रीपूर्न(र्णि)माव्याख्यानं समाप्तम् ॥
श्रीजेसलमेरमधे(ध्ये) लिखता ॥

[ 2330 ] आदिः— श्रीसिद्धचक्राय नमः ॥

शांतीशं शांतिकर्त्तारं नत्वा स्मृत्वा च मानसे ।
अष्टाह्निकाया व्याख्यानं लिख्यते गद्यबन्धत[ः] ॥ १ ॥

अन्तः— संवद्व्योम-रसाष्ट-रात्रिप्रमिते (१८६०) मासे शुचौ शोभने
पक्षे प्रोज्ज्वलतायुते सुविदिते सम्यग् द्वितीयातिथौ ।
पूज्यश्रीजिनहर्षसूरिगणभृद्राज्ये मुदाष्टाह्निका-
व्याख्यानं सुगमं हितं सुविहितं श्रीजेसलाद्रौ पुरे ॥ २ ॥
श्रीमन्तो गुणशालिनः समभवन् प्रीत्यादिमां(मत्)सागरा-
स्तच्छिष्यामृतधर्मवाचकवरा आसन् स्वधर्मादराः ।
तच्छिष्यैर्जिनराजराजिचरणांभोजप्रसक्तैः क्षमा-
कल्याणाभिधपाठकैः सुमनसां श्रद्धावतां प्रीतये ॥ २ ॥ युग्मम् ॥
मुनेरुदयरंगस्याग्रहाद् व्याख्यानमादरात् ।
इदं व्यधायि प्राचीनं पद्यबन्धं विलोक्य तत् ॥ ३ ॥
इति श्रीपर्युषणाद्यष्टाह्निकाव्याख्यानम् ।

[ 2331 ] अन्तः— संवत् १९४० मीति कातिसुदि १० दिने लखि हीराचन्द जावरावाला श्रीसवाईजयपुरमध्ये महाराजजीश्रीमुक्तसूरजजी श्रीजीसाहेब खरतरगच्छका राजा ज्याके उपासरामें लीध्यौ । उपासरो सांगानेरी दरवाजे कुन्दीगराका मोहला मेरुजीकी पासमें ॥

[ 2332 ] आदिः— श्रीआसन्नोपकारकश्रीवीरपरमेश्वराय नमः ॥

काव्यम्— देवाः स्युर्वशमापतन्ति निधयश्चाष्टौ महासिद्धयो
गेहस्थाः सुरधेनुशाखिमणयो यस्य प्रभावान्नृणाम् ।
शिष्टा[भी]ष्टफलप्रदाननिपुणः श्रीवीतरागोदितो
भो भव्याः! भवपारदः प्रतिदिनं धर्मः समाराध्यताम् ॥ १ ॥
जयसिरि वंछिय सुहए अनिट्ठहरणे तिवग्गसारम्मि ।
आलोगपरहिअत्थे सम्मं धम्ममि उज्जमह ॥ २ ॥
त्रिवर्गसंसाधनमन्तरेण पशोरिवायुर्विफलं नरस्य ।
तत्रापि धर्मं प्रवरं वदन्ति न तं विना यद्भवतोर्थ-कामौ ॥ ३ ॥
अथ प्राणिनां प्रतिदिवसकृत्यमाह—

अन्तः— एकदा स्वप्रधानादिभ्यो श्रीहीरसूरेः वर्णनं श्रुत्वा श्रीअकब्बरेण स्वनामांकितफुरमानं प्रेषितं बहुमानेन । गांधारतः संवत् १६३९ ज्येष्ठबहुलत्रयोदशीदिने तत्र संप्राप्ताः । श्रीसाहिना समं मिलिताः । साहिना सादरं पृष्टः सूरी(रिः) । तथा धर्मोपदेशो ददे यथा —

आगरां गतोऽजमेरपुरं यावदध्वनि प्रतिकोसं कूपिकोपेतममारान् विधाय स्वकीयाऽखिलखेटकलाकुस(श)लताप्रकटनकृते प्रति मनारं शतसो(शो) हरिण-विषाणाद्यारोपणविधानादिना प्राग् हिंसाकरणरतिरपि स भूपः दयामति(तिः) संजातः। ततः श्रीसाहिरवदत् यत् श्रीमन्तो मया दर्शनोत्कंठितेन दूरदेशादाकारिताः । अस्मदि(दी)यं च न किमपि गृह्यते । तेनाऽस्मत्सकाशात् श्रीमद्भिरुची(चि)तं याच्यम् ।

ततः विचार्य श्रीगुरुभिस्तदीयाऽखिलदेशेषु पर्युषणापर्वसत्काष्टाह्निकाया-ममारिप्रवर्त्तनं बन्दिजनमोचनं(मम)याचि । तद्गुणचमत्कृतमनसा श्रीसाहिना अस्मदीयान्यपि चत्वारि दीनानि समधिकानि भवतु इति कथयी(यि)त्वा स्ववशीकृतदेशेषु श्रावणबहुलदशमीतः प्रारभ्य भाद्रपदशुक्लषष्ठी यावदमारिप्रव-र्त्तनाय द्वादशदिनामारी(रि)सत्कानि कांचनरचनांचितानि स्वनामांकितानि षट्-फुरमानानि त्वरितमेव श्रीगुरूणां समर्पितानि । प्रथमं श्रीगुर्जरदेशीयम् । द्वितीयं मालवदेशसत्कम् । तृतीयं अजमेरदेशीयम् । चतुर्थं दिल्ली–फतेपुरसत्कम् । पञ्चमं लाहोर–मुलतानदेशसत्कम् । श्रीगुरुपार्श्वे रक्षणाय । षष्ठं देस(श)पंचक-सम्बधि साधारणं चेति । तेन तत्तद्देशेष्वमारिपट्ट(ट)हो विस्तृतः । तथा श्रीगुरूणां पार्श्वादुत्थाय तदेवानेकगव्यूतमिते डाबरनाम्नि महासरसि गत्वा साधुसमक्षं स्वहस्तेन नानाजाति(ती)यानां देशांतरीयजनप्राभृति(ती)कृतानां पक्षिणां मोचनं चक्रे । तथा कारागारस्थबहुजनानां बन्धनभंजनमप्यकारि ।

ततः श्रीगुरुणा साहिप्रार्थनया वाचकश्रीशांतिचन्द्रा महादक्षाः तत्र धर्म्मश्र(श्रा)वणार्थं निहिताः । तैः स्वोपज्ञकृपारसकोशाख्यशास्त्रजलेन सिक्ता(क्ता) सती व्रधिपति(वृद्धिमती) कृपालुता श्रीसाहिहृदये बभूव । तदभिज्ञानं च । श्रीमत्साहिजन्मसम्बन्धी मासः श्रीपर्युषणापर्वसत्कानि द्वादशदिनानि सर्वेपि रविवाराः, सर्वसंक्रातितिथयः, नवरोजसत्को मास., सर्वे ईदिवासराः, सर्वे मेहरवासराः । सोफीआनवासराश्चेति षण्मासिकामारिप्रवर्त्तनसत्कफुरमानम् । जीजीआकरमोचनफुरमानानि च श्रीसाहिपार्श्वात् समानीय समर्पितानि श्रीगुरूणां दोल्याम् । अकबरपातसाहेन श्रीहीरगुरुं विज्ञाप्य शांतिचन्द्रोपाध्यायाः धर्मतत्त्वपृच्छार्थं वन्दनार्थं रक्षिताः । प्रत्यहं तं वाचकमुख्यं भजते ।

एकदा श्रीसाहिपुरः आमलप्रमाणद्वयमुक्ताफले केनचिदिभ्येन प्राभृति-(ती)कृते तं सन्मान्य ततः स्वकोशाध्यक्षं १, चामरधारकं १२, हजारिमन-सुबभिश्रतं च तं प्रति ते फले स्थापनाय प्रदत्ते । सोपि स्वगृहे गतः स्वभार्यायै दत्तवान् । सापि स्नानार्थं समुत्सुका स्ववस्त्रे बध्वा स्नानं चकार । तो सह-चिना इति सा शिक्षिता । इमे मुक्ताफले पातसाहसत्के स्ति(स्तः), त्वया सम्यग् रक्षीं(क्ष)णीये । ततः सा स्वेष्टस्थले मुमोच । कतिपयवासरेषु विगलेषु सा तु मृता ।

अथ कतिचिद्दिनेषु व्यतीतेषु साहिना ते मार्गिते । स प्राह–साहिब ! मद्गृहे गत्वा शीघ्रं समानयामि । ततः स गृहे गत्वा सर्वत्र विलोकिते ।

अप्राप्य महच्चिन्तामग्नोऽभूत् । अहो! मया तद्दिने ओरतं प्रति दत्ते, सा तु मृताऽधुना किं करिष्येहम् । तदनु व्याघुटय आयाति नृपपार्श्वे तदा मार्गे पुण्योदयात् शांतिचन्द्राः वाचकवराः मिलिताः । तैः चिंतास्वरूपं पृष्टम् । तेनाति-नम्रतया यथाजातं विज्ञप्तम् । तदा ते प्राहुः–त्वं गृहे गच्छ, पूर्ववत् यत्र स्थले दत्ते तत्रैव मार्गणीयम् । सोपि तत्र गतः । तथैव स्नानोद्यतां तां वीक्ष्य ते मार्गिते । तयापि स्ववस्त्रांचलग्रन्थीः संछोटय दत्ते ।

सोपि प्राप्ताश्चर्यः साहिपार्श्वे समेतः । तत्पुरः ते संस्थाप्य चामरव्यजनो-द्यतोऽभूत् । परं तदाश्चर्ये मग्नः विचारांदोलितचेताः पुनः पुनः स्तिमित-देहोऽभवत् । तदा साहिना पृष्टः किमद्य वितर्कं करोषि ? भूत-सदृशो भवसि ? स प्राह— स्वामिन् ! एकं महादाश्चर्यमस्ति । तदनु साग्रहं नृपेण पृष्टः सर्वं व्यतिकरं स्माह । तदा साहिनोक्तं किमत्राश्चर्यं स तु अद्वितीयः खुदा-सदृशोस्ति ।

अथ प्रभाते साहिकचेरीमध्ये धर्म्मश्रवणार्थं वाचकमुख्यः सुवर्णपादपीठोपरि सभा[मा]गत्य स्थितः । तदा अन्तःपुरतो सुरत्राणो नि[:]सृतः, तं प्रणम्य स्थितः । ततो व्यजिज्ञपत्–हे पूज्य! किमप्याश्चर्यमस्माकं दर्शय । सोप्याह— कल्ये गुलाबपुष्पवाटिकायां त्वया स्थातव्यम् । तत्राहं दर्शयिष्ये । ततः प्रत्यूषे भूपः तत्र गतः । वाचकेन्द्रोपि तत्रागात् । द्वौ परस्परं वार्त्तां विज्ञतः (कुर्वन्तौ) तावत् पातसाहिनोबतगर्जारवो श्रुतः । सहसा श्रुत्वा चकितः । स्वसेवकान् प्राह— अस्मादाज्ञा विना कस्यापि नोबतरवो १२ द्वादशगव्यूतमध्ये न जायते । किमिदं श्रूयते ? पश्यत यूयम् । ततस्ते विलोक्य नृपं प्राहुः–साहिः युष्मत्पिता हुमाउ ससैन्य[:] त्वां मिलनाय समेति । इति कथनानन्तरमेव हुमाउ एत्य पुत्रमालिंग्य स्थितः । सर्वेषामकबरसैनिकानां मेवा–मिठाइभूतरजतरकाबान् ददौ । नृप प्रति महत् सन्मानं दत्वा यथागतस्तथा ययौ । क्षणेमादृशोऽभूत् । तत् अकब्बरः वाचकेन सह तथैव वार्त्ता कुर्वन् स्वात्मानं दृष्टवान् । साश्चर्यं दध्यौ च नेदमिन्द्रजालम् । अस्मदादि(दी)नां समर्पितवस्तूनि प्रत्यक्षं दृश्यं-(श्यं)ते । अतः नूनं इदं चेष्टितं गुरूणा विनिर्मितं ज्ञायते । ततः गुरवे नत्वा स्तुतिं चकार ।

अथैकदा नृपः अटकदेसेस(शेश)जयनार्थं ३२ कोसमितप्रयाणमकरोत् । तदा हाजरी सुरत्राणेन गृहिता । तन्मध्ये वाचकस्यापि नाम श्रुत्वा दध्यौ– अहो ! वाहनोपानहादिविमुक्ताः अमी महद्दुःरकं(दुःखं) प्राप्ता भविष्यन्ति । ततः स्वसेवकान् स प्राह— तान् गुरून् अत्रानय । सेवका गुरून् स्माहुः । स्वामिन्! त्वां भूपः स्मारयति । अत्र मुनीन्द्राऽवस्था ईदृशी जातास्ति सो(शो)फ-युक्तपदाभ्यां पदमात्रमप्यग्रे चलनाक्षमः टोप्परकस्थितप्रासुकजलेन वस्त्रां-चलमार्द्रीकृत्य स्वोरसि स्थापितो(तम)स्ति । द्वौ शिष्यौ वैयावृत्यं कुरुतः । ततः सेवकैः एतत् स्वरूपं सर्वं नृपाय निवेदितम् । तदा भूपेन सुखपालं मुमोच । तदनु साधुमुख्यः एकां काष्ठावलीकामानाय्य तदुपरि आरुरोह । स्वशिष्यौ तत्प्रान्तौ

समुत्पाद्य चलितौ । साहिना तथावस्थं समागच्छन्तं वि(वी)क्ष्य दध्यौ । अहो ! गुरुवचनरसिकाः धन्या इमे ये मदनुयायिनः प्रवर्तन्ते । अन्यथा मत्समीपे क एषां लाभोस्ति । मदीयं वस्त्रं पात्रं तृणमपि कदाचित् न गृहीतम् । अहो ! अस्य समर्थस्य निरीहता ॥

तदनु स नृपः अभिमुखमेत्य कदमबोसीं चकार । आह च— स्वामिन् ! मत्कृते महद् दुःखं प्राप्नोषि । मद्गुनो सहनीयः । अद्य मया युष्मच्चरणौ न विलोकितौ । तस्मात् एतावती तस्ती दत्ता । अतः परं महत् प्रयाणं युष्माभिः न कार्यं, शनैः शनैः पश्चात् समागन्तव्यम् । ततः साहिः क्रमेण अटकदेशाधिपपुरं परिवेष्ट्यावस्थितः । द्वादशवर्षाणि जातानि, परं तद्वप्रः न स्वाधि(धी)नोऽभूत् ।

एकदा भूपं मलाणीया इति प्राह— जीवे आपनां पातस्याहूंकी जादीउं छती घडी घडीकी बला दूर साहिब हरे । राज ए शांतिचन्द्र सेवराकुं बार बार तुम सलाम कदमपोसी करते हो । दीनदूनीके पातस्याह अदबी खुदा होकर, उस वास्ते ए गढ लीया नही जाता । इति श्रुत्वा नृप मौनमाधाय स्थितः । तत्स्वरूपं गुरु(र)वे ज्ञापितम् ।

गुरुः प्राह— यद्दिने वप्रग्रहणेच्छा तव स्यात् तद्दिने गृह्यते । लेश-मात्रापि त्वया चिंता नैव कार्या, परं तव सैन्यं अत्रैव रक्षणीयम् । आवां द्वावेव व्रजावः परं तव सैनिकानां इत्थं विज्ञाप्य पुरमध्ये कस्यापि हिंसा नैव कार्या । त्वया बालगोपालादयो न वध्याः इति शिक्षां दत्त्वा प्रभाते एकाकिनौ द्वावेव निस्सृतौ । तत्पृष्ठे सर्व सैन्यं निःसृतम् ।

तदा मलाणीया इति जजल्पु(ल्प)–ए सेवराके पातसाह फिरके मंग लगा । ए सेवरा पातसाहकी पानसाइ डबो देगा । दुसमनके हाथे अकब्बरकुं देवेगा । इत्याद्यनेकजल्पनानि शृण्वन् सन् भूपः गुरुणा सह तद्वप्रसमीपे गतः । तदा गुरुः एकया फुंकमात्रया सर्ववप्रखातिका पूरिता । द्वितीयया फुंकया च शत्रुसैन्यं ची(चि)त्रलिखितमिव संभूतम्, तृति(ती)यया फुकया च गोपुराण(णि) धाणिकानीव स्फुटितानि ।

ततः स्वहस्तेन भूपं संगृह्य स्वयमेव सोत्साहं साश्चर्यं तत्र स्थितः, भूपः गुरुं स्माह–हे पूज्य! मम किंचित् कार्यं सानुग्रहं कृत्वा समादिश । तदा गुरुः जीजीयाकरमोचन प्रतिवर्षं चतुर्दशकोटिद्रव्यप्रदं याचितम् । चटकजिह्वा-भक्षणं त्वया न कार्य इत्यादि धर्मार्थम् याचितम् ।

ततः तेषां मलाणीयानाकार्य इत्युक्तम्— अब बेफिकर तुम हूए, ए सेवरा अदबी खुदा इनकी बेअदबी मत करना । देखो एके साहें राह उपर चलना । अदमाकु मेरी पातस्याइ देवे तो में क्या करु । वास्ते सब इनकुं कदमबोसो करो । केसा ए बेनमा फकीर साहिबके राह पर चलता है । एती करामतका धणी है तो बि किसीकुं इजा नहि देता । एता काम

मेरे खातर गुरुके हुकम पर कीया है । इति कथनपश्चात् स्वसैन्ययुत-दील्यां समागतः । प्राभृतीकृतानि फुरमानानि श्रीगुरूणां वाचकेन्द्रेणेति ।

एवंविधेन श्रीपर्युषणापर्व समाराधनि(नी)यम्— पर्युषणपर्वसु अमारि-पटह उद्घोषणीयः । पूर्वोक्तवत् साधार्मिकवात्सल्यं विद्वयं(धेयम्) । जिणगिहिए हवण १। जिणधणवुड्ढी २। साहम्मीअभत्ती ३। गुरुपूआ ४। सुअपूआ ५। दीणुद्धरणं ६। पाणीरक्खणं ७। धम्मजागरिआ ८। सुपत्तदाणं ९। तह तित्थपभावणा १०। सोही ११। दुगआवस्सयकरणं १२। णियमधारणं १३ —इत्यादिकृत्यैः वार्षिकपर्व समाराधनी-यम् । श्रीतपागच्छनमे(भसि) नभोमणिशाली लघुः यः सूरी(रिः) सो मम मोददः । तत्पट्टभानूदयसोमसूरिणा वह्न्यंक-हस्ति-शशिवर्षे(१७९३)स्वकृतम् ॥ १ ॥

इति श्रीपर्युषणपर्व समाप्तम् ।

संवत् १९५४ मीती काती सुद ११ लीषतं कल्ला रांमनाथपुष्करणा-ज्ञाती । पादरामध्ये लीखी ।

[ 2333 ] **आदिः—** ॐ नमः । ऐं नमः । श्रीमहिमाप्रभसूरीश्वरगुरुभ्यो नमः ।

नत्वा गुरुं गिरं चापि श्रीभावप्रभसूरिणा ।
अष्टाहिकाधुराख्यानं भविबोधाय तायते ॥ १ ॥

**अन्तः—** श्रीपर्युषणापर्वाराधनेन परमपदसुखं स्वाधीनं कुरुत । शाश्वतसुखदानदक्षश्री-जिनशासनप्रभावात् ।

अणहिल्लाभिधे रम्ये पत्तने धनिपूरिते ।
चैत्यादिहर्म्यसंयुक्ते ढुंढेरसंज्ञपाटके ॥ १ ॥

पौर्णिमीयाभिधे गच्छे स्वच्छाच्छगुणान्विते ।
विनयप्रभपट्टाब्जेऽभवन् सूर्यसमाः क्रमात् ॥ २ ॥

लेखितानेकचित्कोशा आचार्यगुणसंयुताः ।
सद्विद्याचञ्चवः श्रीमन्महिमाप्रभसूरयः ॥ ३ ॥

तेषां पट्टभृतेदं हि श्रीभावप्रभसूरिणा ।
अष्टाहिकाधुराख्यानं कृतं स्तात् पुण्यवृद्धये ॥ ४ ॥

इति श्रीअष्टाहिकाधुराख्यानं श्रीभावप्रभसूरिकृतं संपूर्णम् । मन्दबुद्धि-शिष्याणां वाचनाकृते श्रीरस्तु ।

( अन्यदीयहस्तेनोल्लेखितम्— )

चन्द्राष्ट-घोटक-क्षोणि(१७८१)प्रमिते वत्सरे वरे ।
नभोमासि सिते पक्षे तिथौ सौम्येस्य पूर्णता ॥ १ ॥

[ 2338 ] **आदिः—** श्रीसरस्वत्यै नमः ॥

स्वस्ति श्रीदायिकां सद्यः कार्यप्रत्यूहवारिणीम् ।
दधामि मानसे नित्यं श्रीविद्यां षोडशाक्षरीम् ॥ १ ॥

शत्रुंजये जिनं वन्दे नाम्ना भुवनदीपकम् ।
भूरिभाग्यभरप्राप्यं वैरस्वामिप्रतिष्ठितम् ॥ २ ॥

सुधाकुंडे महातीर्थे जीवितस्वामिसत्तमः ।
शांतिनाथो जगन्नाथः स्मर्त्तव्यः शांतिसिद्धये ॥ ३ ॥

उज्जयंतनगे शृंगे श्रीकांचनबलानके ।
काममूर्त्तिः सुधांभोधिर्नेमिनाथो जिनेश्वरः ॥ ४ ॥

श्रीफलाद्व(व)द्धिकायां तु विश्वकल्पलताभिधः ।
श्रीपार्श्वो वांछितं देयात् सहस्रफणिपूजितः ॥ ५ ॥

मोढेरे वायडग्रामे खेडे मुंडस्थलेऽपि च ।
उपकेशपुरे वीरं वन्दे श्रीमालपत्तने ॥ ६ ॥

स्मृत्वा सुधर्म्म-जंबू-प्रभवादिक-वज्ज(ज्र)सेनगणनाथान् ।
श्रीचंद्र-मानतुङ्गान् श्रीमच्छ्रीमानदेवांश्च ॥ ७ ॥

प्रद्योतनसूरी[न्]द्रान् [उ]द्योतन-वर्द्धमान-जिनचन्द्रान् ।
जिनदत्त-कुशलसूरीन् युगप्रधानांश्च जिनच[न्]द्रान् ॥ ८ ॥

तच्छिष्यमुख्यदक्षान् लक्षगुणान् सकलचन्द्रगणिचन्द्रान् ।
सांप्रतमेव विजयिनः तच्छिष्यान् शिष्यभाग्यानि ॥ ९ ॥

मषभूम-सेष-काजी-नाहड-लञ्चाह-यवनराजेभ्यः ।
दातॄन् गोरक्षायाः राज्ञामादेयवाक्यानि ॥ १० ॥

वचनकला-काव्यकला-रूपकला-भाग्यरंजनकलानाम् ।
निस्सीमावधिभूपान् सदुपाध्याय(या)न् श्रुताध्यायान् ॥ ११ ॥

श्रीसमयसुन्दराख्यान् तच्छिष्यो हर्षनन्दनो वादी ।
मध्याह्नव्याख्याने सुपद्धतिं यत्नतः कुरुते ॥ १२ ॥ षड्भिरादिकुलकम् ॥

अन्तः— एवंकृते तेनापि सकलकर्मक्षयतः शुक्लध्यानेन द्रव्यचारित्रगमनाद् भावचारित्री- भूय सिद्धि[:] प्राप्ता लोभार्थिः[? र्थी] अपि चारित्रपालनेन प्रान्ते सिद्धि- तार्थो जातः । एवं धारणमुनिनामस्मरणादानन्दमाला भवतु इति श्रीऋषि- पंचाशिकावृत्तौ । इति श्रीबृहत्खरतरगच्छाधीश्वर-युगप्रधानश्रीजिनचन्द्रसूरि- शिष्यमुख्य-पंडितसकलचन्द्रगणि- शिष्यमुख्यश्रीसमयसुन्दरोपाध्याय-शिष्यमुख्य- वादिवाचनाचार्यहर्षनन्दनगणिविरचितायां मध्या[ह]नव्याख्यानपद्धतौ अधिक- मासव्याख्यानषट्कं संपूर्ण तत् समाप्तौ च समाप्तोयं ग्रन्थः ॥

श्रीसिद्धार्थवसुन्धरेशतनयस्याद्वादिनः शासने
संताने तु सुधर्म्मणो गणभृतोऽवच्छिन्नपर्वक्रमे ।
श्रीमत्कोटिकसूरितः परिवृते श्रीकोटिकाख्ये गणे
श्रीवज्रा[त्रा]ह्वयमुनीश्वरप्रविवरच्छाखाविशेषे वरे ॥ १ ॥

कुले चंद्रसंज्ञे गुरोश्चन्द्रसूरेः यशोभद्रतोरण्यवासे विशिष्टे ।
हरेर्भद्रसूरिः क्रमात् पट्टधारी गुरुदेवनामाभवद् ब्रह्मचारी ॥ २ ॥

वसतिमार्गविकासनकारकः खरतरापरनामकधारकः ।
विमलमंत्रिनिषेवितपक्षजो धरणशक्रकृताद्भुतदैवतः ॥ ३ ॥

श्रीवर्द्धमानोपि जिनेश्वरश्च सूरीश्वर[ : ] सोऽभयदेवसूरिः ।
युगप्रधानो जिनदत्तसूरिः श्रीराजगच्छे जिनचन्द्रसूरिः ॥ ४ ॥

श्रीभाणसोले जिनभद्रसूरिः भट्टारक[? कः] श्रीजिनहंससूरिः ।
अनुक्रमात् शुद्धपरंपरायां माणिक्यसूरिर्गुणरत्नभूमिः ॥ ५ ॥

तत्पट्टांबुजचंचरीककरणिः श्रीशाहडीये कुले
भास्वद्भास्करपुङ्गवः शशाकरो जाग्रत्कलाभिः कलौ ।
स्याद्वादाभिधनागलोकविबुधश्रेणिषु वाचस्पतिः
श्रीमच्छ्रीजिनचन्द्रसूरिसुगुरुर्योगः( ?यौग)प्रधानः क्षितौ ॥ ६ ॥

येषां हस्तप्रभावातिशयमभिदधुर्मन्त्रिकर्मादिचन्द्राः
श्रीमत्साहीशसाहेरकबरनृपतेः प्राप्तसभ्यप्रतिष्ठाः ।
स्थाने स्थाने प्रकृष्टा नरपतिविदिताः श्रावका ऋद्धिमन्तः
संघाध्यक्षा विपक्षप्रतिभयजनकाः लक्षसंख्या विशेषात् ॥ ७ ॥

येषां वासविशेषमंत्रमहिमां संदर्शयांचक्रिरे
जोगी-संघप-सोमजीप्रभृतयः प्राग्वाटवंशोद्भवाः ।
गच्छोऽतुच्छतरो गणेषु सकलेष्वेकप्रतिष्ठास्पदं
शिष्याः सर्वविशिष्टशास्त्रविबुधाः शिष्यप्रशिष्यान्विताः ॥ ८ ॥

येषां दर्शनमात्रविस्मितमनाः ढिल्लीभवः साहिराट्
जीवामारिमनेकदेशनगरानाग्र्याद्यर्थकेषु व्यधात् ।
येभ्यस्तीर्थकरस्तदीयनृपतेः कोशं परित्यक्तवान्
येभ्यः साधुजनाः तुरुष्कनृपतेर्देशे विहारं व्यधुः ॥ ९ ॥

संप्रापुः स्वर्गलोकं कृतसुकृतघनाः द्रुम्मवेन्नातटेऽस्मिन्
तेषां पट्टे पटिष्ठाः युगवरपदवीप्राप्तपूर्वाः[——] ।
प्रत्यक्षं विद्यमानाः गुरुगुणकलिता जैनसिंहा यतीन्द्राः
तेषां राज्ये सुराज्यप्रतिमगुणिजने दीप्तिम [ च्छा ]द्धवर्गे ॥ १० ॥

त्रिभिर्विशेषकम् ।

जिनचन्द्रसूरियुगवरराजानां शिष्यमुख्यगणनायाम् ।
गणिसकलचन्द्रविबुधाः सद्गुरुभक्ताः सदा आसन् ॥ १ ॥

तेषां शिष्या मुख्याः वचनकला–कविकलासु निष्णाताः ।
तर्क–व्याकृति–साहित्य–ज्योतिः–समयतत्त्वविदः ॥ १२ ॥

प्रज्ञाप्रकर्षः प्राग्वाटे इति सत्यं व्यधायि यैः ।
येषां हस्तात् सिद्धिः संताने शिष्यशिष्यादौ ॥ १३ ॥

अष्टौ लक्षानर्थानेकपदे प्राप्य ये तु निर्ग्रन्थाः ।
संसारसकलसुभगाः विशेषतः सर्वराजानाम् ॥ १४ ॥

तेषां शिष्यो मुख्यो वादी हर्षनन्दनो नाम्ना ।
मध्याह्नव्याख्याने सुपद्धतिं यत्नतश्चक्रे ॥ १५ ॥

गाथालापकसूत्राणि कथा व्याख्याश्च पण्डितैः ।
शोध्यानि हितनिष्णातैः त्यक्त्वा मात्सर्यमुल्बणम् ॥ १६ ॥

त्रिक-सप्त-षडेकाब्दे(१६७३) अक्षततृतीयादिने ।
ग्रन्थोयं पूर्णतां प्राप्तः श्रीअणहिल्लपुरपत्तने ॥ १७ ॥

ग्रन्थेस्मिन् ग्रन्थाग्रं षट्साहस्रीत्वेककेन संयुक्ता ।
सदनुष्टुभां समस्तं शस्ते व्याख्यानविख्याते ॥ १९ ॥

अंकतोपि ग्रन्थाग्र० ६००० ॥

अथ प्रशस्तिः—

नानाधर्मरतैर्विवेकविशदैर्भव्यागिभिस्संकुलं
श्रीप्रल्हादनपार्श्वनाथविमलागारेण संशोभितम् ।
अस्ति स्वर्गविजित्वरं पुग्वरं प्रल्हादनं पावन
मन्ये चास्य हि लज्जया सुरपुरं नायाति दृग्गोचरम् ॥ १ ॥

विशालेस्ति पुरे तस्मिन्नोशवंशोतिविश्रुतः ।
तस्मिन् वंशे पुरा ह्यासीत पारेखान्वयभूषणः ॥ २ ॥

रामचन्द्रो धनी धर्मी कार्याकार्यविवेकभृत् ।
तत्सुतो दूलछाचन्द्रो गुणज्ञोस्ति विशारदः ॥ ३ ॥

तस्याभूद् भगिनी नाम्ना पार्वती धर्मकर्मठा ।
ग्रन्थोयं लेखयांचक्रे तद्भ्रात्रा तच्छिवाय च ॥ ४ ॥

स्वच्छे हृत्तपोगच्छे विजयानन्दसूरयः ।
प्रसिद्धा भुवनेभूवन् शिष्यौघसेवितक्रमाः ॥ ५ ॥

तेषां पट्टे किलेदानीं वर्त्तन्ते गच्छनायकाः ।
विजयकमलाचार्याः शीलालंकृतविग्रहाः ॥ ६ ॥

द्वि-रसांक-भूमितेऽब्दे(१९६२) श्रावणमासे सिते दले धन्ये ।
भूपतिश्रीरमहम्मदखानेत्याख्यस्य शुभराज्ये ॥ ७ ॥

विजयानन्दसूरीणां विनयिविनेयस्य नित्यपठमकृते ।
ग्रन्थोयं तेन मुदा समर्पितः कांतिविजयस्य ॥ ८ ॥

इति प्रशस्तिः ॥ ग्रन्था० ६००० ॥

[2362] **अन्तः** — संवत् १६५४ वर्षे आषाढसितत्रयोदशोदिने शुक्रवासरे अद्येह श्रीपत्तन-वास्तव्यश्रीश्रीमालीज्ञातीयसुश्रावकपुण्यप्रभावकदोसीवीरपालभार्यापुंजी-पुत्रसाह-रहीआ-पुत्रीवाल्ही-रहीयासहितेन इदं पुस्तकं लिखाप्य पूर्णिमापक्षे प्रधानशाखायां श्री ६ ललितप्रभसूरीणां प्रदत्तं वाच्यमानं चिरं जीयात् ॥

[2363] **अन्तः** — संवत् १९१५ कर्त्तिकमासे कृष्णपक्षे त्रयोदशी भृगुवासरे मुंबइबंदरे लिखितम् इति ग्रंथ समाप्तम् ॥

[2364] **अन्तः**— दक्षषट्नन्देन्दुरब्दे(१९६२)माघवद्यः १३ लि० ऋ० व्यास मगदत्त । आर्वीमध्ये इदं पुस्तकं श्रीमद्विजयानंदसूरिनामधेयानां प्रशिष्यश्रीहंस-विजयोपदेशाद् ज्ञानभं० ।

[2365] **अन्तः**— संवत् १६५७ वर्षे श्रावणमासे असितपक्षे श्रीमद्देवराजपुरे सोमवासरे शोभननक्षत्रे कल्याणनी विजयवेलायां पंडितलेज-पाठेनापूर्ति लिखेत श्रीजिनकुशलसूरिप्रसादेन शुभं भवतु ॥

[2414] **अन्तः**— इति श्रीद्वादशव्रतोच्चारविधिर्विस्तरतः संपूर्णः ॥

संवत् १७९० मिते माघवदि त्रयोदश्यां बुधवारे पौर्णिमीयपक्ष-प्रधानशाखायां ढंढेरपाटके भ०श्री५श्रीभावप्रभसूरिभिरिदं पुस्तकं लिखितम् ॥

[2415] **अन्तः**— इति श्रीसम्यक्त्वोच्चारविधिः संपूर्णः ॥

संवत् १६६६ वर्षे फागणवदि ३ दिने श्रीमत्बृहत्तपागछे पूज्यश्री-१° श्रीसौभाग्यरत्नसूरीस्व(श्व)रः तत्शिष्य उपाध्यायश्री ५ श्रीदेवसागर-तत्शिष्यपं०श्रीसौभाग्येन लिपीकृतम् ॥

[2446] **बा०आदिः**— श्रीशंखेश्वरपार्श्वेशं प्रणताऽभीष्टदायकम् ।
प्रणमामि परप्रेम्णा सर्वाभीप्सितसिद्धये ॥ १ ॥

सर्वज्ञं सर्वभाषामि ... ... ।
सर्वसत्त्वहितं वंदे वर्द्धमानजिनेश्वरम् ॥ २ ॥

अध्यात्मकल्पद्रुमसंज्ञकस्य शास्त्रस्य संक्षिप्तहितावहस्य ।
वार्ताभिरप्रौढमतिप्रसुष्टये बालावबोधां क्रियते विवृति[म्] ॥ २ ॥

हवे ग्रंथनि आदिः—

ग्रंथकार प्रथम स्थापनानुं सूत्र कहे छे- अथायमिति— अथानंतरं शांतन्नमा रसाधिराजः मया मुनिसु(?सुं)दरसूरिणा पद्यसंदर्भेण भाव्यते । पूर्वि श्रीमुनिसुंदरसुरीइं त्रिदशतरंगिणीगुर्वावलीप्रमुखा किधा । तिवार पछि ए ग्रंथ किधो । ते भणी इहां अथ शब्द आंण्यो ते माटे अथ कहेतां एटला थकि अनंतर ए जे जैन शासननें विषें प्रत्यक्ष शांतनाम जे रसाधिराज रस जे श्रृंगार १। हास्य २। करुण ३। रौद्र ४। वीर ५। भयानक ६। बीभत्स ७। अद्भुत ८। शांत ९॥ ए नव मध्ये अधिराज कहेतां पूर्वे मननां घर्यो छे ते ॥ काव्यबंधे प्रकट करि कहिइं छे ॥

बा० अन्तः— ए श्रीअध्यात्मकल्पद्रुमनामा ग्रंथनुं बालावबोधार्थ उपाध्यायश्रीरत्नचंद्रगणिकृतया उपाध्यायश्री ... गणिकृत ए बे टिका जोइने मे माहरि बूद्धिने अनुसारे मुझ सरिषा स्वल्पबुद्धि प्रांणीना उपकारने अर्थे लेश मात्र लिख्यो छे ।। ते मध्ये अनाभोगथी तथा अज्ञानथी तथा भ्रांतिथी जे कांइ सूत्रना टीकाना अनुसारथी ओछुं अधीकुं अयुक्त लिखाणुं हुइं तेहनु मिच्छामि दुक्कडं अथवा किहांइक सुगमपणाने काजे किहांइक रूढीथी जे कांइ विभक्ती वचन लिंग कारक अन्वय प्रमुखनो विपर्याय किधो हुइं ते अपराध बहुश्रुत गीतार्थे षमवुं तथा उपकार बूद्धे अशुद्ध टालिनइं शुद्ध करवुं ॥

अथ प्रशस्तिः—

त्रि(?श्री)मत्तपगणगगनांगणभाश(स)नतरू(?रु)णतरणिनिभः ।
श्रीराजविजयसुरी(?सूरि)र्बभु(?भू)व भूरी(रि?)विततयशाः ॥ १ ॥

योत्याक्षी(द्) विभवं घनं सुविहितानुष्ठानबद्धादरो
लोकं कोकमिव प्रबोधमनयद् गोभिश्च कोकानिवत् ।
छित्वा वादिदर्पमुज्ज्वलपटा(?)ऽञ्चके विसे(शे)[षो]ज्ज्वलान्
यो वाचालितमालवेश्वरसितच्छत्रप्रभावोज्ज्वलः ॥ २ ॥

रत्नत्रयप्रथितसंयमभृत्तदीय—
पट्टेषु रत्नविजयाह्वयसु(?सू)रिरासि(?सी)त् ।
येन प्रशांतरसमाप्रशमार्णवेन
रत्नाकरायितममल्पगुणौघरत्नैः ॥ ३ ॥

तस्यान्वये निखिलभु(?भू)तलगीतकि(?की)र्ति[:]
श्रीहीररत्न इति सु(?सू)रिवरो विरेजे ।

स्वर्ग गतोप्यखिलभक्तसमीहितानि ।
बोधापि पु(?पू)रयति मव्य इवामरद्रुः ॥ ४ ॥

तत्पट्टभु(?भू)षणमणिर्जयरत्नसु(?सू)रिः
सर्वाग्रणीर्गुणिषु भु(?भू)रिगुणाश्रयोभुत(?भूत्) ।
श्रीभावरत्न इति भावविदां वरेण्य-
स्तत्पट्टभृ[ज]जयति संप्रति सु(?सू)रिराजः ॥ ५ ॥

श्रीहीररत्नसु(?सू)रेर्मुख्याः शिष्याः मुनिर्मलामिख्याः ।
श्रीलब्धिरत्नविबूद्याः(?बुधाः) शास्त्रार्णवपारदृश्वानः ॥ ६ ॥

श्रीसिद्धिरत्ननाम्ना पाठकवर्यास्तदन्वये तदनु ।
श्रीहर्षरत्नवाचकवरा वरोयोगुणैर्वन्द्याः ॥ ७ ॥

लक्ष्मीरत्नगणीशा आसन् दुर्वादिदन्तुअलक्ष्मीशाः ।
श्रीअ्ना(ज्ञा)मरत्नगणयस्तदाश्रयाः सांप्रतं जयन्तु चिरम् ॥ ८ ॥

तच्चरणकमलसेवाभृङ्गस्तत्संगसमयतरङ्गः ।
सुविही(?हि)तकल्याणविमलगणिवरविहितार्थनीतुम्न(?) ॥ ९ ॥

बालाव[बो]धवार्त्तामध्यात्मसुरद्रुमाख्यशास्त्रस्य ।
मुनिहंसरत्न एतामतनोत् तनुबुद्धिसत्त्वहिताम् ॥ १० ॥

शोध्यः सुतत्त्वविद्भिर्ग्रन्थोयं धीधनैः प्रवाच्यमानश्च ।
सद्भावसंपदाढ्यैराचंद्रार्क ची(?चि)रं जयतात् ॥ ११ ॥

इति श्रीअध्यात्मकल्पद्रुमबालावबोधः संपूर्णः ॥

संवत् १९२४ अषाढ सु०२ राजनगरे लीपीकृत लहो०भाग(र)-
दास दाडिगरानि पोलमध्ये ॥ श्री ॥

[2448] **आदिः**— श्रीपरमात्माने नमः ॥

ब्रूमः किमध्यात्ममहत्त्वमुच्चैर्यस्मात् परं स्वं च विभिद्य सम्यक् ।
समूलघातं विनिहत्य घाति नाभेयभूः कैवलमाससाद ॥ १ ॥

**अन्तः**— श्रीहर्षवर्धनकृतं स्वपरोपकारि-
द्वात्रिंशिकावरचतुष्टयमिष्टबोधम् ।
तत्त्वार्थिनां रसदमस्तु लसद्विवेक-
ख्यातिस्खलद्बलचिदात्मवरा प्रतीतिः ॥ ३२ ॥

इत्यध्यात्मबिन्दौ सदुपाध्यायश्रीमद्धर्षवर्द्धनविरचिते शुद्धस्वरूपप्रकाशिका चतुर्थी द्वात्रिंशिका समाप्ता ॥

संवत् १७७८ ना वर्षे ज्येष्ठमास विदि १२ बुधे पत्तनमध्ये मु० वीरचन्द लपीकृतम् ।

[2456] अन्तः—

स्वस्ति श्रीशुभकार्यसिद्धिकरणश्रीपार्श्वनाथार्हति
चे(?चै)त्ये सद्विधिना विवेकनिक : संपूज्यमाने सदा ।
राज्ये राउल-श्रीमनामनृपतेः कल्याणमल्लस्य च
वर्षे विक्रमतस्तु षोडशशते एकोनसत्सप्ततेः(१६६९) ॥ १ ॥

बृहद्खरतरगच्छे श्रीमज्जिनभद्रसूरिसंताने ।
जिनमाणिक्ययतीश्वरपट्टलंकारदिनकरे ॥ २ ॥

आम्रव्भाग्यजये प्रबुद्धयवनाधीशप्रदत्ताभये
साक्षात्पंचनदीशसाधनविधौ संप्राप्तलोकस्मये ।
यावज्जैनसुतीर्थदंडकरयोः संमोचनाख्यालये
गोरक्षाजलजीवतारणविधिप्राप्तप्रतिष्ठाश्रये ॥ ३ ॥

देशाकर्षणसाधुदुःखदलनात् कारुण्यपुण्याशये
तत्तद्रूपविलोकरंजितमनःश्रीनूरदीरंजनात् ।
श्रीमच्छ्रीजिनचन्द्रसूरिसुगुरौ यौगप्रधाने चिरं
राज्यं कुर्व्वति जैनसिंह(सूरि)सुगुरोः(?रौ) सयौवराज्ये किल ॥४॥

कोट्टे जेसलमेरे उपकेशज्ञातिमंडनं जातः ।
भणसालीकगोत्रीयः आसासाहः सदोत्साहः ॥ ५ ॥

तत्पुत्रो वस्ताख्यः तत्तनयः पुंजराज इति नामा ।
तत्पुत्रो जसधवलः तत्सु(?सू)नुः पुनसीसाहः ॥ ६ ॥

तत्कुलदीपप्रतिमः श्रीमल्लस्तस्य पुत्रवररत्नम् ।
चांपलदेवीकुक्षिस्वर्णाचलकल्पवृक्षो यः ॥ ७ ॥

भुवि जन्तुजातरक्षास्मारितसुकुमारपालभूपालः ।
जिनवरगुरुपरमाज्ञातिलकितभालो विशालगुणः ॥ ८ ॥

धर्म्मस्थानव्ययितद्रविणः प्रगुणः प्रधानशीलेन ।
जीर्णोद्धारधुरीणः दीनानाथादिदुःखहरः ॥ ९ ॥

स्वालयदेवगृहेषां भवाधिपस्थापनामहे सम्यक् ।
प्रत्येकश्राद्धानां पददेयो राजतीं मुद्राम् ॥ १० ॥

मिष्टान्नभोजनेन रंकान् संतोष्य वर्षनिघ्नासु ।
अष्टाहिकासु घुसृणैः वर्णाढ्यैः पूजयांचक्रे ॥ ११ ॥

सार्द्धसहस्रचतुष्टयप्रमिताः प्रतिमाश्च सप्तचैत्येषु ।
द्रव्यस्तवाधिकारी भावस्तवसंगतः सततम् ॥ १२ ॥

नगरजनराजमान्यो विधिपक्षाराधको विधिज्ञश्च ।
दुःकालकं(?कुं)तहस्तो मृदुवचनो सर्वमदरहितः ॥ १३ ॥

श्रीथाहरुसुनामा भन्नजहरिराज-मेघराजाभ्याम् ।
युक्तः कोडिमदेवर आढ्यो न्यायार्जितैर्द्रव्यैः ॥ १४ ॥

ज्ञानप्राप्तिनिमित्तं भवे भवे बोधिबीजशुद्धयर्थम् ।
स ज्ञानकोषमेनं सम्यक् संलेखयांचक्रे ॥ १५ ॥

चित्कोसा(?श)लेखनेन श्रेयो यदवापि थाहरूकेन ।
हर्षात् तेन प्राज्ञा जिनागमं वाचयन्तु सदा ॥ १६ ॥

इति पुस्तकप्रशस्तिः कृता वा० हर्षनंदनगणिना ॥

संवत् १८६३ मिती कार्त्तिकसुदि १५ तिथौ लिखितं श्रीजेसलमेरमध्ये वा० श्रीमतिश्रीजिनभक्तिसूरिशाखायां चिलासजीगणि-तत्शिष्यस० श्रीलक्ष्मीराजजीगणि-तत्सि(शि)ष्यमुख्यपं० श्रीसत्यमूर्तिजीमुनि-तत्सि(शि)ष्यमुख्यपं० रत्नचन्दजीमुनि-तत्सि(शि)ष्यपं०...चंदपठनार्थं श्रीजेसलमेर-(रे) चतुर्म्मासः कृतः रावलजी श्रीमूलराजजी राज्यं करोति सम्यक्धर्म्मी श्रीजिनहर्षसूरिजी विद्यमान इयं पुस्तिका ल० प० तिलककीर्तिमुनिः शुभं भवतु यत्नसें रखणी अयं (यत्नतो रक्षणीयेयं) पुस्तिका ।

[2471] **आदिः**— ॐ नमो वीतरागाय ॥

परमात्मानमानम्य मुमुक्षुः स्वात्मसंविदे ।
इष्टोपदेशमाचष्टे स्वशक्त्या सादरं स्फुटम् ॥ १ ॥

तत्रादौ यो यद्गुणार्थी स तद्गुणोपेतं पुरुषविशेषं नमस्करोतीति परमात्मगुणार्थी ग्रन्थकृत् परमात्मानं नमस्करोति ॥ तद्यथा—

यस्य स्वयं स्वभावाप्तिरभावे कृत्स्नकर्म्मणः ।
तस्मै संज्ञानरूपाय नमोस्तु परमात्मने ॥ १ ॥

**अन्तः**— विनयेन्दुमुनेर्वाक्याद् भव्यानुग्रहहेतुना ।
इष्टोपदेशटीकेयं कृतास्रा(शा)धरधीमता ॥ २ ॥

उपशम इव मूर्त्तो ललितचन्द्रमुनीन्द्रो-
ऽजनि विनयचन्द्रः सर्व्वकोरैकचन्द्रः ।
जगदमृतसगर्भाः शास्त्रसंदर्भगर्भाः ।
शुचिचरितचरिष्णोर्यस्य धिन्वंति वाचः ॥३॥

जयन्ति जगतीवन्द्याः श्रीमन्नेमिजिनांह्रयः ।
रेणवोपि शिरस्याज्ञामारोहति यदाश्रिताः ॥

॥ इति इष्टोपदेशटीका समाप्ता ॥ ८०० ग्रन्थाग्रम् ॥

[2488] **बा० आदिः**—ऐन्द्रवृन्दनतं नत्वा वीरं तत्त्वार्थदेशिनम् ।
अर्थः श्रीज्ञानसारस्य लिख्यते लोकभाषया ॥ १ ॥

इन्द्रसंबन्धिनी जे श्रीलक्ष्मी तेहना सुखनइ विषइ मग्न एहवो जे पुरुष तेण०

अन्तः— इति श्रीयशोविजयकृतज्ञानसारनामा ग्रंथः संपूर्णः ।

गच्छे श्रीविजयादिदेवसुगुरोः स्वच्छे गुणानां गणैः
　　प्रौढिं प्रौढिमधाम्नि श्रीतविजयप्राज्ञाः परामैयरुः ।
तत्सातीर्थ्यभृतां नयादिविजयप्राज्ञोत्तमानां शिशोः
　　श्रीमन्न्यायविशारदस्य कृतिनामेषा कृतिः प्रीतये ॥ १ ॥

*बाल्मलालापनवद् बालबोधो नायं किन्तु न्यायमालासुधौघः ।*
आस्वाद्यैनं मोहहालाहलस्य ज्वालाश्चांतेर्धीविशाला भवन्तु ॥ २ ॥

आतन्वाना भारती भारतीस्तुल्याविशा संस्कृते प्राकृते वा ।
शुक्तिसूक्तिर्युक्तिमुक्ताफलानां भाषाभेदो नैव खेदोन्मुखः स्यात् ॥ ३ ॥

सुरजीतनयः शांतिदासहृन्मोदकारणविनोदतः ।
कृतः आत्मबोधभृतविश्रमः श्रमः श्रीयशोवाचकैरयम् ॥ ४ ॥ इति ॥

संवत् १७६२ शाके १६२७ प्रवर्त्तमाने माघमासि शुक्लपक्षे त्रयोदशीतिथौ भौमे श्रीमत्पूर्णिमापक्षे प्रधानशाखायां परमपूज्यचूडामणि-श्रीमहिमाप्रभसूरीश्वरचरणनीरजनिषेविमुनिभावरत्नेनेदं पुस्तकं लिखी-(पी)कृतम् ।

[2492] अन्तः— इति श्रीधन्यचरित्रशालीनि श्रीदानकल्पद्रुमे श्रीधन्यशालिसर्वार्थसिद्धिप्राप्तिवर्णनो नाम नवमः पल्लवः संपूर्णोयं श्रीदानकल्पद्रुमनामा नवपल्लवीग्रंथः ग्रन्थाग्रम्– १२९२ ॥

संवत् १६६७ वर्षे अश्विनोशुदि १५ शुक्रवासरे वाचकशिरोमणि–*पूज्याराध्यश्री ५ श्रीराजलाभगणि–तत्सि(शि)ष्यपंडितविवेकलाभगणि-*भिर्लिखितं हांसोटबिंदिरे ॥

[2494] अन्तः-- श्रीवी(वि)जयादी(दि)धर्म्मसुगुरो[:] प्राप्य प्रसादं परं
　　विचारी(रि)त्रधरो विदग्धचतुरः श्रीरङ्गरङ्ग[:] कवीः(विः) ।
संवत् श्रीगुणाष्टभुमीप्रमीते(भूमिप्रमिते)धन्यससाली
　　स्तत्पदांबुजरेणुरामविजयैः स्पष्ट[:] टबोयं कृतः ॥ १ ॥

श्रीतपागच्छेस(श)परमगुरुसोमसुन्दरसुरी(सूरि)तत्सिष्येन श्रीजी(जि)-नकीर्तिसूरी(रि)[णा] द्री(वि)रची(चि)ते श्रीदानकल्पद्रुमनइं विषइं श्रीधन्नासालिभद्रसर्वार्थसिद्धिप्राप्तिवर्णनो नाम नवपल्लवः संपूर्णोयं सुत्रार्थसहितोयम् ।

*पं० श्री ५ न्यानविजयजीग० तत्सि(शि)ष्य पं०श्रीगोविंदविजयग०-*तत्सी(शि)ष्यपं०ज्ञानविजयगणी–तत्सी(शि)ष्यमुनिरविविजयग०वाचनार्थम्–संवत्

१८८१ ना वर्षे मधुमासे शी(सि)ते पक्षे ५मी ती(ति)थौ सुरगुरुवासरे ल० श्रेतानगरे श्री(सि)द्धनाथप्रसादात् ल० [illegible] पं० रंगसत्केन ।

[2496] आदिः— श्रीगणेशाय नमः ॥ ॥श्रीआर्यादुर्गायै नमः ॥

प्रणम्य मातरं गंगाभैरवीं वनशंकरीम् ।
महादेवाख्यपितरं श्रौतस्मार्तविशारदम् ॥
दिवाकरेण सुधिया सारमुद्धृत्य शास्त्रतः ।
शिष्याणां तन्यते तुष्टयै दानचन्द्रिका ॥

अन्तः— अभ्यस्य तु त्रिरात्रं व्रतस्थः प्राणायामैश्चांतेघमर्षणं जपेत् महापापैः मुच्यते मत्या चेद्ग्रामात्प्राग्वेदविनिष्क्रम्यस्ताभि(?)॥ इति स्मृत्यर्थसारोक्तप्रायश्चित्तानि ॥

इति दानचन्द्रिका समाप्ता ॥

[2497] अन्तः— श्रीमत्हर्षपुरीयगच्छतिलकः श्रीसूरिवंशे गुरु-
विद्वत्पर्षदि राजशेखर इति प्रख्यातिमायाति यः ।
तेनेदं नवदेशमार्थिहृदयानन्दाय सारं मितं
प्रोक्तं संघमहोत्सवप्रकरणं सुश्रावकश्रीकरम् ॥३६॥

इति दानषट्‌त्रिंशी समाप्ता ॥

[2498] अन्तः— इति श्रीतपागच्छनायकश्रीविजयसेनसूरीश्वर-शिष्यश्री[illegible]गणि-शिष्य-पं० कनककुशलगणिविरचिते दानप्रकाशे पात्रदानप्रकाशकोऽष्टमः प्रकाशः ॥

श्रीमत्तपागणनभोंगणपद्मबन्धुर्भाग्याद्भुतत्वरमहीरमणादवाप्ताम् ।
ख्यातिं जगद्गुरुरिति प्रथितां दधानः सश्रीकहीरविजयाभिधसूरिरासीत् ॥१॥

तत्पट्टे वरगुणमणिगणरोहणभूधरा धरापीठे ।
सांप्रतमद्भुतयशसो विजयन्ते विजयसेनसूरिवराः ॥२॥

गीतः— वाचकचूडामणयः श्रीमन्तः शांतिचन्द्रनामानः ।
विद्यागुरवो विबुधा विजयन्तां कमलविजयाश्च ॥३॥

एषां श्रीसुगुरूणां प्रसादतः काय-बाण-रस-चन्द्र(१६५६) ।
प्रमिते वर्षे रचितो ग्रंथोयं कनककुशलेन ॥४॥

दानप्रकाशे श्लोकानां सचतुस्त्रिंशताधिकाः ।
संजाताष्टशती विश्वे ग्रन्थोयं जयताच्चिरम् ॥५॥

ग्रन्थाग्रम् ॥८३४॥ इति प्रशस्तिः ॥

हालीवाटकग्रामे मुश्रावक[illegible] लिखितोयं ग्रन्थः ॥

[2504] आदिः— [illegible]
मुनिमालामौलिमणिर्जयति श्रीधर्मचन्द्रगणिः ॥१॥

श्रेयान् श्रीमालवंशे विशदतररुचिः साधुशाखासमुत्थः
सद्वृत्तः श्रीनिवासः प्रवरनरपतेरेव मान्यो महार्घ्यः ।
रम्यो मुक्तागुणाभो निरुपमसुखदो राजपालांगजन्मा ।
श्रीमान् श्रीजावडेन्द्रः प्रथितगुणगणो राजते संघपोयम् ॥४॥

तस्य सुश्रावकस्यैव प्रार्थनातो विरच्यते ।
श्रीमद्धर्मविलासाख्यो ग्रन्थोल्पमतिना मया ॥५॥

**अन्तः**— इति प्रासादभूम्युप्तां स्थिरां कीर्त्तिकरीं श्रियम् ।
मत्वा भव्यैर्निजा पद्मा संस्थाप्या तीर्थभूमिषु ॥११॥

इति श्रीभरतकारिताष्टापदस्वरूपम् ॥

इति श्रीधर्म्मविलासग्रंथे संघाधिपश्रीजावडसुश्रावकाभ्यर्थनया श्रीखरतरगणनभोंगणदिनमणिश्रीजिनसागरसूरि-शिष्यवाचनाचार्यश्रीधर्मचंद्रगणि-शिष्यवाचनाचार्यश्रीमतिनंदनगणिकृते सत्कुलवर्णनो नाम चतुर्थोल्लासः संपूर्णः ॥

लिपिकृतव्यास नथमल नागोरमध्ये ॥ संवत् १९६४ रा माघमासकृष्णापक्षचतुर्दश्याम् १४ ॥

[2506] **मू०आदिः**— ओमित्यक्षरमक्षरद्युतिकरं त्रैलोक्यगर्भं पर-
ब्रह्माकारमखंडबिंदुममलं भव्यार्धचंद्रोर्ध्वगम्० ॥

**वृ०आदिः**— श्रीपार्श्वं प्रणिपत्यादौ श्रीगुरुभारतीं तथा ।
धर्मोपदेशग्रंथस्य वृत्तिरेषा विधीयते ॥१॥

ॐकारवर्णादारभ्य चाक्षाकारं यथाक्रमम् ।
एकादशोत्तरशतैः काव्यैर्धर्मोपदेशकम् ॥२॥

**स्व०अन्तः**— इति श्रीधर्म्मोपदेशाभिधानकाव्यस्य श्रीलक्ष्मीवल्लभगणिविरचितायां स्वोपज्ञाख्यायां टीकायां आत्मतत्त्वचिंतनप्रक्रमो द्वादशः संपूर्णः ॥

श्रीमत्खरतरगच्छे श्रीमज्जिनकुशलसूरिनामानः ।
भट्टारका बभूवुर्भास्वद्गुणरत्नवारिधयः ॥१॥

श्रीविनयप्रभनामा तच्छिष्यः पाठकस्तु गणिमुख्यः ।
तच्छिष्यविजयतिलकः पाठकपदधारकः श्रेष्ठः ॥२॥

[2507] **अन्तः**— यत्पादपङ्कजरजोभिरपि प्रमाणाल्लग्नैः शिरस्यमलबोधकलावतारः ।
भव्यात्मनां भवति तत्क्षणमेव मोक्षं स श्रीगुरुर्दिशतु मे मुनिवीरनन्दी ॥७॥

दन्तानन्दमपारसंसृतिपथः श्रान्तः श्रमच्छेदकृत्
प्रायोदुर्लभमत्र कर्णपुटकैर्भव्यात्मभिः पीयताम् ।
निर्यातं मुनिपद्मनन्दिवदनप्रालेयरश्मेः परा
स्तोकं यद्यपि सारताधिकमिदं धर्मोपदेशामृतम् ॥ ८ ॥

इति धर्मोपदेशामृतं समाप्तम् ॥

[2517] अन्तः— इति यतिदिनकृत्यप्रकरणं संपूर्णम् ॥ कृतिरियं महोपाध्यायश्रीश्रीयशोविजयगणिनां श्रीमत्पूर्णिमापक्षोदारपट्टालङ्कारभट्टारकश्री५श्रीमहिमाप्रभसूरीश्वर–शिष्यमुनिभावरत्नेन प्रथमादर्शो लिपीकृतम् ॥

[2522] अन्तः— श्रीबृहत्खरतरगच्छे श्रीजिनभद्रसूरिअंतेवासी श्रीबृहत्खरतरगच्छे भट्टारकजङ्गमयुगप्रधानक१०८श्रीश्रीजिनचन्द्रसूरिशा(शा)खायां वा०श्री१०८श्रीश्रीराजविनेयजीगणिः तत्सिष्य पां०प्र०श्रीश्री १०८ श्रीसदारङ्गजीमुनिः तत्सिष्यः पं०१०८ श्रीसुमतशेखरजीमुनिः तत्शिष्य पं०ही(हि)तधीरमुनिना श्रीवर्द्धमानदेशना गद्यबन्धेन प्रणीतायां तेतलीपिताप्रतिबोधनो नाम दशमः उल्लासः समाप्तः ॥ १० ॥

इति श्रीवर्द्धमानदेशना गद्यबन्ध(धेन) समाप्तम्(प्ता)। ग्रन्थाग्रन्थम् ४७८५ प्रत्यक्ष[र]गणनया ॥

[2529] अन्तः— इति श्रीजिनदत्तसूरिविरचिते विवेकविलासे द्वादसो(शो)ल्लासे जन्मचर्य्यायां परमपदप्रापणो नाम द्वादसो(शो)ल्लासः ॥ १२ ॥

इति श्रीविवेकविलासः संपूर्णः ।'

संवत् १९१८ रा साके १७८३ रा ... लिपिकृतं धुलिया-ग्राममध्ये षांनदेसे पांना विवेकविलासरा गया छापरा जरां लिषर नवा घाल्या छें हीरविजे चिरं मोहनविजै आजदिन धुल्यारी पेठमें बाजार छें अङ्गरेजबाहादरराज्ये ॥

[2533] अन्तः— इति समाप्तेयं वैराग्यकल्पलताकृतिः श्रीयशोविजयगणीनां श्रीविजयदेवसूरिराज्ये ॥

सिद्धार्थं वदति स्म मार्गमतुलं सिद्धार्थराजाङ्गजः
सिद्धार्थं भविनां शिवाध्वगमने सिद्धार्थ[य]न्मंगलम् ।
यः सिद्धार्थनिकेतनं शमभृतां हृद्गह्वरे स्फूर्जितं
क्रीडन् सन्निव केसरी स जयति श्रीवर्द्धमानः प्रभुः ॥ १ ॥

तत्पट्टे सद्गण्यपुण्यकलिताः पुण्यं च दानावचः
श्रीपुण्यप्रभसूरयः समभवन् पुण्यप्रशंसाः क्रमात् ।
तत्पट्टाम्बुजराजहंससदृशाः सिद्धांतगोचश्चवः
श्रीविद्याप्रभसूरयः स्म दधते धीवारलाक्रीडनम् ॥ २ ॥

लक्षितवाक्यसुरंजितसूरयः समभवल्ललितप्रभसूरयः ।
विजितदुर्द्धरवादिमतारयः सुधृतयो धृतयोगरसास्ततः ॥ ३ ॥

तत्पट्टे विनयप्रभाख्यगुरवः श्रीसूरयः सत्क्रियाः
संजाता भविलोककोकहृदयामन्दाय भानूदयाः ।
षट्त्रिंशद्गुणगौरवोत्तरचश्चारित्रधर्मोज्ज्वलाः
पंचाचारसुपोषतः परिगलद्दोषारयोऽकश्मलाः ॥ ४ ॥

तत्पट्टे प्रभुतास्पदस्य पदवी प्राधान्यशाखापुषि
लक्ष्ये पौर्णिमपक्षदक्षकलया श्रीसूरयः सांप्रतम् ।
राजन्ते महिमाप्रभाख्यगुरवः शब्दे च कोषे नये
काव्येऽलंकृति-नाटके च गणिते जैनेंबुधौ छंदसि ॥ ५॥

यद्देशनारविरुचः शुचिकर्णजालैश्चित्रं प्रविश्य सदने हृदि भव्यजंतोः ।
विकालिकं शमसुधामयमुत्प्रकाशं नित्योदयं निदधते सुविबोधचन्द्रम् ॥६॥

तेषां पदाम्बुजरजःस्पृशनानुजीवो सन् भावरत्न इति नामतया सुशिष्यः ।
तच्छिष्य एव सहिजो इति नामतोसौ वैराग्यकल्पलतिका लिखिता मुनेन ॥७॥

संवत् नेत्र-रस तुरंग-चन्द्रप्रमिते (१७६२) पुस्तकमिदं लिपीकृतम् ।
सर्वग्रन्थाग्रम् ७००८ ॥ श्रावणसुदि ११ दिने ।

[2534] **अन्तः—** इति वृत्तं मयोद्दिष्टं संश्रये षष्ठकेखिलम् ।
चान्यन्मु(?न्म)या कृते ग्रंथेऽन्यस्मिन् द्रष्टव्यमेव च ॥ ७४ ॥

इति श्रीउमास्वामिकृतश्रावकाचारः समाप्ति(प्तः) । लिषितं लहीया श्रीकृष्ण अमरदत्तजी अमदावादमध्ये लक्षो(ख्यो) छे । संमत् १९५४ सुभ मी(ति) भाद्रवा सुद ४ थ ॥

[2544] **अन्तः—** नवांगवृत्तिकारश्रीअभयदेवसूरिविरचिता षोडशकवृत्तिः ॥
(अन्यदीयहस्तेन लिखितमिदम्-)
वृद्धिविजयपठनार्थं मुम्बैमध्ये लषावि ॥

[2545] **अन्तः—** अथवा हरिभद्रसूरेः स्तुतिं कुर्वाणोऽपरः कश्चिदिदमाह वचनम्-ननु हारिभद्रमिदं हरिभद्रसूरेरिदं धर्मगत वचनं प्रकरणाश्रय तस्माद्धर्मश्रवणे बहुश्रुतसमीप एव यत्नो विधेयो बहुश्रुतेभ्यो हरिभद्राचार्यवचनार्थानुपलंभादेवं वचनमाहात्म्यद्वारेण स स्तौति-

कृत्वा विवरणमेतत् पुण्यं यदवापि तेन भव्यजनः ।
अध्यास्तां षोडशकलाशशिमंडलभास्वरं स्थानम् ॥

कृतिरि ' श्वेतपटाचार्यस्य यशोभद्रसूरेरिति ।
इति षोडशकविवरणं समाप्तम् ॥

[2547] **अन्तः—** इति महोपाध्यायश्रीकल्याणविजयगणि-शिष्यमुख्यपण्डितश्रीलाभविजयगणि-शिष्यपण्डितश्रीजिनविजयगणि- सतीर्थपंडितश्रीनयविजयगणि-चरणकमल-चंचरीकपंडितश्रीपद्मविजयगणिसहोदरोपाध्यायश्रीज(य)शोविजयगणिविरचिता योगदीपिका नाम्नी षोडशकवृत्तिः संपूर्णा समाप्ता ।

एषा षोडशकव्याख्या संक्षिप्तार्थावगाहिनी ।
सिद्धाऽक्षततृतीयायां न सा यदक्षयसिद्धये ॥ १ ॥

इति षोडशकप्रकरणं संपूर्णम् ॥ ग्रन्थम् १२८८ ।

[2552] अन्तः— इति साधुभावना संपूर्णा ॥

श्रीचक्रेश्वरसूरिमानससरोहंसः समुत्साहितः
सत्यं सउअनदुःखकैरवरवेः श्राद्धस्य वाचा रवेः ।
आचार्यो विमलाभिधः समकृत श्रीब्रह्मचन्द्रापरः
ख्यातामिकय इमां मनो रमयितुं सद्वृत्तपञ्चाशतम् ॥ ५ ॥

आकांक्षा यदि मोक्षवर्त्मनि मतिः संतोषसौख्ये यदि
प्रद्वेषो विषयेषु यद्यप्यथ रतिर्नीरागतायां यदि ।
तच्छुद्धां विधुतोऽपि कोमलतरामप्यञ्जगर्भामिमां
संवेगद्रुमकन्दलीं पठत भोः बद्धो भवद्भ्योऽञ्जलिः ॥

[2554] अन्तः— पूर्वर्षिभिर्या रचिता कथेयमग्रेपि काव्यैः ससुभाषितैश्च ।
श्लोकैर्मया सा प्रथिता प्रमोदाद् वेदाभ्रबाणेन्दु(१५०४)मितेत्र वर्षे ॥२७॥

इति श्रीचैत्रगच्छीयैः श्रीगुणाकरसूरिभिः ।
चक्रे श्लोकैर्नवा रम्या कथा सम्यक्त्वकौमुदी ॥२९॥

पुष्पदन्तौ स्थिरौ यावद् यावच्च ध्रुवमण्डलम् ।
वाच्यमाना बुधैस्तावज्जीयात् सम्यक्त्वकौमुदी ॥ ३० ॥

इति सम्यक्त्वकौमुदी शुभा संपूर्णा ।
अक्षरगणनया ग्रंथाग्रंथम् १७०१, अक्षर २१ ।

संवत् गुणं रसि मुणि शसि वर्षे (१७६३) चैत्रमासे शुक्लपक्षे तिथि
२ मंगलवासरे लिखितं पूज्य उग्रसेनऋषि तस्य शिष्य–पूज्य उत्तमऋषि
तस्य शिक्ष(ष्य)लिखितं वल्हूऋषि आत्मार्थे यमनाबादनगरे ।

[2557] अन्तः— हयेषुलोकसंख्येऽब्दे (१४५७) सूरिश्रीजयशेखरः ।
श्रीमदञ्चलगच्छेमूं चक्रे सम्यक्त्वकौमुदीम् ॥ २ ॥

इति श्रीसम्यक्त्वकौमुदी समाप्ता । ग्रंथाग्रम् ७९७ एवं सही ।

संवत् १५९५ वर्षे रत्नपुरग्रामे लिखिता हीरसुन्दरेण स्वपरोपकाराय ।

[2559] अन्तः— श्रीविक्रमार्कनृपतेर्युग्म षट्–मनुवत्सरे (१४६२) ।
श्रावणसितपंचम्यां जलकोटपुरे स्थितः ॥१॥

श्रीजयचन्द्रसूरीणां चरणांबुजषट्पदः ।
स लिलेख कथामेतां बोधाय मनुजन्मनाम् ॥२॥

सूर्याचन्द्रमसौ यावत् धरित्री च ससागरा ।
सम्यक्त्वकौमुदी तावद् वर्त्तिषीष्ट सतां हृदि ॥३॥

इति धर्मकीर्त्तिमुनिविरचिता सम्यक्त्वकौमुदीकथा संपूर्णा ॥
ग्रंथाग्रम् ११६२ ॥

[ 2564 ] अव०अन्तः— इति हिंसाष्टकस्या ।वूरिर्मुख्यतश्चतुर्भंगीतो नवभेदव्याख्या चैतत् लिखी-(पी)कृता भ०श्रीज्ञानविमलसूरिभिः ।

संवत् १७५३वर्षे श्रावणवदि त्रयोदश्यां तिथौ गुरुवारे प्रथमदके पं०प्र १श्री१०५श्रीभक्तिविशालगणि–तत्शिष्यपं०प्रेमराजेन लिपिचक्रे श्रीपत्तनमध्ये चतुर्मासीस्थितेन खरतरवसहीति नाम पाटकस्थितैरिति ॥

[ 2608 ] अन्तः— राजगति श्रीजिनचन्द्रसूरिगच्छाधिराजैरिह राजगच्छे ।
प्रमोदमाणिक्यगणेर्विनेयलेशेन साक्षाज्जयसोमनाम्ना ॥१॥
मुन्यब्धि-सच्चन्द्रकला(१६४७)मिताब्दे समर्थिता वृत्तिरियं सुखेन ।
श्रीपार्श्वनाथेष्टगुरुप्रसादान्नंद्याच्चिरं धीधनवाच्यमाना ॥२॥
यदत्र किंचिन्मतिमांद्यदोषात् सिद्धांतमार्गाद् विपरीतगत्या ।
विनिर्मितं तद्बिबुधाः सुबुद्धया मदाग्रहात् साधु सुविशोधयन्तु ॥३॥

ग्रंथाग्रम् १०३५ ॥ संवत् १६६१ वर्षे शाके १५२६ प्रवर्त्तमाने माघमासे शुक्लपक्षे अष्टमीदिने प्रधानशाखायां श्रीललितप्रभसूरिशिष्येन चेलारामजीकेन प्रतिः लिपीकृता ।

[ 2629 ] अन्तः— कमठवनमृतांभोराशिसंवासिसर्प्पा–
धिपतिकलितमूर्त्तिर्नीलतालीककांतिः ।
सितरुचिरविराजल्लोचनः केवलश्री–
परिचयचतुरात्मा श्रीजिनो वः श्रियेस्तु ॥१॥

श्रीवर्द्धमानः शमिनां मनांसि जिनो धिनोतु त्रिपदी यदीया ।
व्याप्नोति विश्वं कलिघातिकर्म्मक्षयोदिता विश्वमनश्वरश्रीः ॥२॥

श्रीवीरशासनमहामहिमा गरिष्ठः श्रीभद्रबाहुविहिताचरणप्रतिष्ठः ।
काले कलावपि विलुप्तघनाघसंघः श्रीमानयं विजयते यतिमूलसंघः ॥३॥

श्रीनागेन्द्रकुले मुनींद्रसवितुः श्रीमन्महेन्द्रप्रभोः
पट्टे पारंगतागमोपनिषदां पारागश्वग्रामणोः ।
देवः संयमदैवतं निरवधिस्त्रैविद्यवागीश्वरः ।
संजज्ञे कलिकल्मषैरकलुषः श्रीशांतिसूरिर्गुरुः ॥४॥

शक्तिः कापि न कापिलस्य न नये नैयायिको नायक–
श्चार्वाकः परिपाकमुज्झितमतिर्बौद्धश्च मौद्धत्यभाक् ।
स्याद् वैशेषिकशेमुषी च विमुखी वादाय वेदांतिके ।
दांतिः केवलमस्य वक्तुरयते सीमां न मीमांसकः ॥५॥

तत्पट्टे प्रथमः शमिप्रभुरभूद्आनंदसूरिः परः
    संजज्ञेऽमरचन्द्रसूरिरखिलानूचानचूडामणिः ।
शश्वद् यस्य सरस्वतीप्रसरणे सिद्धेच्छितुः संसदि ।
    प्राज्ञैश्चेतसि वेतसीतरुरसाचार्यकं कार्यते ॥६॥

सिद्धांतोपनिषन्निषण्णहृदयो बीजन्मभूस्तत्पदे
    पूज्यः श्रीहरिभद्रसूरिरभवच्चारित्रिणामग्रणीः ।
भ्रांत्वा शून्यमनाश्रयैरतिचिराद् यस्मिन्नवस्थानतः ।
    संतुष्टैः कलिकालगौतम इति ख्यातिर्वितेने गुणैः ॥७॥

गुरुः श्रीहरिभद्रोयं लेभेधिकवयःस्थितिः ।
मोहद्रोहाय चारित्रनृपनासीरवीरताम् ॥८॥

तत्पट्टे विजयसेनसूरयः पूरयंति कृतिनां मनोरथान् ।
तद्गवी वृषभसूतनूतना कामधेनुरिव सर्वकामदम् ॥९॥

गर्वात् पूर्वमनादरैरवहितैः पश्चात् ततो विस्मितैः
    प्रस्विन्नैरनुविस्मृतात्मभिरथो वादेऽनुवादे क्षणात् ।
भाग्यैर्मानिमनीषिणां परिणता पुंस्त्वेन वागेष इ-
    त्याक्षिप्तैरथ सेव्यते स्म सहसा यः सादरं वादिभिः ॥१०॥

यस्योपदेशममृतोपमितं निपीय श्रीवस्तुपालसचिवेश्वर-तेजपालौ ।
संघाधिपत्यमसमं जिनतीर्थतेजःसंवर्द्धनाज्जितश[त]क्रतू चक्रतुस्तौ ॥११॥

श्रीमद्विजयसेनस्य सौमनस्यं नमस्यते ।
यद्वासिता धृताः कैर्न गुणाः शिष्याश्च मूर्द्धसु ॥१२॥

शिष्यस्तस्य च लक्षणक्षणचणः साहित्यसौहित्यवा-
    नुद्यत्तर्कवितर्ककर्कशमतिः सिद्धांतशुद्धातुरः ।
श्रीधर्माभ्युदये कविः प्रविलसद्दुर्वादिगोत्रे पवि-
    स्तामेतामुदयप्रभाख्यगणभृद् वृत्तिं व्यधात् कर्णिकाम् ॥१३॥

तस्याज्ञया विजयसेनमुनीश्वरस्य शिष्येण सेयमुदयप्रभदेवनाम्ना ।
योग्या विशेषविदुषामुपदेशमालावृत्तिः कथाप्रथनतोभिनवा वितेने ॥१४॥

प्रथमादर्शे प्रथमानमानसो देवबोधविबुध इमाम् ।
स्थपतिरिव स्थापयिता गुरुषु नतोऽतनुत साहाय्यम् ॥१५॥

चांद्रे कुले कलशतः किल सूरिदेवानन्दाग्रशिष्यकनकप्रभसूरिनाम्नः ।
प्रद्युम्नसूरिरुदितः कवितासमुद्रसृष्टिप्रयोग्भुवदशोधयदेष वृत्तिम् ॥१६॥

उत्सेकतोत्सूत्रनिरूपणाद् वैर्याशातना स्यात् तनुतापि काचित् ।
मिथ्यास्तु मे दुष्कृतमत्र साक्षी श्रीसंघभट्टारक एव तीर्थः ॥१७॥

एकैकेन विमोहशिक्यचरणांश्छित्वा कषायानिमान्
दीप्तेभानुकृशानुधामनि ममश्चैकेन हुत्वात्मनः ।
मंत्रस्याष्टशतैरितीह अर्पितैस्तैः पंचभिः सिद्धये
गाथाभिर्गुरुगुंफिता विजयते अप्योपदेशावलिः ॥१८॥

कल्पाविष्करणादितो विवरणाद् विज्ञाय विज्ञात्मना-
माम्नायादुपदेशपद्धतिमिमामासेवमानो मुदा ।
लोकाग्रोपरिवर्त्तिनीमभिमुखीं कुर्वीत वीतान्यधी-
र्वृत्तिर्निर्वृतिदेवतां शिवपुरीसाम्राज्यकामः कृती ॥१९॥

तत्त्वोदित्वरसप्तभूमिकमहाप्रासादराजांगणं
यावद् भाति जगद्गुरोर्भगवतस्तीर्थेशितुः शासनम् ।
तावच्छ्रावकसाधुधर्मविजयस्तंभद्वयालंबिनी
वृत्तिर्वन्दनमालिका विजयतां तत्रोपदेशस्रजः ॥२०॥

सेयं पुरे धवलके नृपवीरधवल मंत्रीशपुण्यवसतौ वसतौ वसद्भिः ।
वर्षे ग्रह-ग्रह-रवौ कृतभार्क्कसंख्यैः श्लोकैर्विशेषविवृतिर्विहिताद्भुतश्रीः ।२१।

इत्याचार्यश्रीउदयप्रभदेवसंघटिताया उपदेशमालायाः कर्णिकायां विशेषवृत्तौ तृतीयः परिवेशः संपूर्णः ॥ ग्रथा[ग्र]म् ३७१४ एतावता च संपूर्णा उपदेशामालायाः कर्णिकाख्या विशेषवृत्तिरिति । ग्रन्म् १७७४ ।

सं० १४५९ वर्षे भाद्रपदसुदिपक्षे १३ शनौ अद्येह श्रीघोघा-वेलाकूले श्रीमत्तपागच्छे भ०श्रीजयविजयसूरिशिष्य-पं०देव[सुन्दर]गणि-योग्य-श्रीउपदेशमालावृत्तिर्लिखिता व्य० महिराजलेषकेन ॥

[ 2644 ] बा०आदिः—प्रणम्य श्रीमहावीरं धीरं सर्वार्थसाधकम् ।
ह्युपदेशमालाया शब्दार्थस्तन्यते मया ॥१॥
नमिऊण कहेतां नमस्कार करीने०

बा०अन्तः—इति उपदेशमालाप्रकर्ण(रण) टबो संपूर्णः बालावबोधटीक(का) समाप्तः(प्ता) ।
पं०श्रीसांमलचन्द्रगणि-प०श्रीगलालचन्द्रल(लि)पीकृतम् ।

श्रीमद्यशोविजयवाचकसत्प्रसादान्निष्पादितोयमतिमन्दजनस्य हेतोः ।
सश्रीकसाम्यविजयो विबुधेन्द्रमुख्यः शिष्येण वृद्धिविजयेन पदार्थगुंफः ॥१॥

वर्षे पुष्कर-जगति-विधुर-विधुसंमिते तथा युयुजे ।
गुरुयुक्तपूर्णिमायां सूर्यादिमबन्दिरे रम्ये ॥२॥

श्रीमत्परमगुरूणां नामस्मरणप्रभावतः स्पष्टम् ।
श्राद्धी श्यामोयमतः पूर्णः संजात इति भद्रम् ॥३॥

इति श्रीउपदेस(श)मालाप्रकर्ण(रणं) समाप्तः(प्तम्) ।

संवत् १८३२ वर्षे मासोत्तममासे पोषमासे कृष्णपक्षे ५ ती(ति)थौ बुद्ध(ध)वासरे लिषिते चतुर्थप्रहरे सकलपण्डितसभासो(शो)भनी(न)भाल-स्थल[तिल]कायमानपण्डितश्री१०८श्रीलालचन्द्रगणि–तत्‌शिष्यपण्डितशिरो-रत्नपण्डितश्री२१श्रीसांमलचन्द्रगणि-तत्‌शिष्यश्री१९श्रीबालालचन्द्रगणि-तत्‌शिष्यपं०श्री ५ श्रीहीराचन्द्रगणि–तत्‌शिष्यवीर्यचन्द्रव(वा)चनार्थम् ॥

जिहां भूसायर चन्दरवी मेरु महिस्त होय ।
तिहां प्रतपो परिवार ज्युति लेषक पाठक दोय ॥१॥

लषितं श्रीवैणनगरे श्रीवि(वी)रश्रीशांतिजिनप्रसादात् ।

[ 2649 ] अन्तः—

सूरिर्विजयदेवाख्यस्तपागच्छाधिनायकः ।
विख्यातस्त्रिजगत्यासीत् विद्यया गुरुसंन्निभः ॥

तस्य पट्टोदयाद्रौ श्रीविजयसिंहसूरिराट् ।
आदित्य इव तेजस्वी सिंहवच्च पराक्रमी ॥२॥

सत्यादिविजयस्तस्यांतेवासी सत्यभाषकः ।
क्रियोद्धारः कृतो येन प्राप्यानुज्ञां गुरोरपि ॥३॥

विनेयस्तस्य कर्पूरविजयः सात्त्विकः सुधीः ।
कीर्त्तिः कर्पूरवद् यस्य प्राप्ता सर्वत्र विश्रुता ॥४॥

क्षमादिगुणसंदर्भेः क्षमाविजय इत्यभूत् ।
तस्य शिष्यो विनीतात्मा शिष्यानेकसमन्वितः ॥५॥

शब्दसा(शा)स्त्रादिशास्त्राणां वेत्ता शिष्यगणान्वितः ।
जिनादिविजयाह्वानस्तस्य शिष्यः सुरूपभाग् ॥६॥

कर्मप्रकृतिप्रभृतिशास्त्रतत्त्वविचारविद् ।
उत्तमाद् विजयस्तस्य शिष्योभूद् भूरिशिष्यकः ॥७॥

तस्य पादयुगांभोजभृंगतुल्येन चाणुना ।
पद्मविजयशिष्येण स्वपरानुग्रहाय वै ॥८॥

राग–वेद–तथा नाग–चन्द्रेति(१८४६) च वत्सरे ।
वसंतपंचमीघस्त्रे विक्रमात् बुधवासरे ॥९॥

गौतमकुलक नाम प्रोक्तं श्रीगौतमर्षिणा ।
मया बालावबोधोयं कृतस्तद्बाल्यबुद्धिना ॥१०॥

त्रिभिर्विशेषकम् ॥

यत् कचिद् वितथं प्रोक्तं मतिमांद्यादजानता ।
तत् सर्वं धीधनैः सो(शो)ध्यं विधाय मयि स[त्]कृपाम् ॥११॥

वीरस्य सा(शा)सनं यावत् वर्त्तते विश्वदीपकम् ।
तावद् बालावबोधोयं तिष्ठतु शुद्धवासनः ॥१२॥

इति श्रीसकलभट्टारकशिरोमणिना भट्टारकश्रीश्रीविजयदेवसूरीणां पट्टोदयाद्रौ सहस्रांशुश्रीविजयसिंहसूरयः अभूवन् । तेषां सकलविनेय-जनशिरोरत्नं पं० श्रीसत्यविजयोऽभूत् । तच्छिष्यपं० कर्पूरविजयस्तत्-शिष्यपं०श्रीक्षि(क्ष)माविजयस्त(च्छि)ष्यसकलसभाभामिनीभालस्थलतिलकाय मानपं०श्रीउत्तमविजय–शिष्यपं०पद्मविजयकृतबालावबोधे श्रीगौतमकुलक-प्रकरणे एकादशाधिकैकशतकथानकानि समाप्तानि संपूर्णमस्तु ॥

[ 2709 ] आदिः— प्रसादमासाद्य यदंहिपद्मयोर्जडोपि विद्वज्जनशेखरायते ।
सारस्वती सा मम मानसीतरे तनोतु हंसीव निवासमंजसा ॥७॥

विश्वातिशायिमतयो गुणशालिरुद्र–
पल्लीयगच्छगगनांगणशीतभासः ।
सिद्धांतवारिनिधयो गणधारिणोमी
नन्दन्तु संघतिलका गुरवोऽस्मदीयाः ॥८॥

येषां गुरूणामभिधा अगत्यामजिह्मवाग् ब्रह्ममयीव मन्ये ।
नो चेत् कथं तत् स्मृतिमात्रतोयं जनः कवित्वं तनुते जडोपि ॥९॥

तन्निर्देशात् स्वकृतेः श्रीमद्दानोपदेशमालायाः ।
वृत्तिं सुखावबोधां कुर्वे स्वपरोपकाराय ॥१०॥

इह हि प्रकरणकारः प्रकटीकृतामृतायमानसत्पात्रदानोपदेशसारः संसारपारावारवारिप्रवाहप्रणिमज्जत्प्राणिगणनिस्तारणप्रवहणायमानागण्य–पुण्यकाननोल्लासघमाघमसंरंभे श्रीदानोपदेशमालाप्रकरणप्रारंभे तत्त्वातत्त्व-विवेकच्छेकास्तोकलोकचेतश्चमत्काराय प्रेक्षावत्प्रवर्त्तनाय शिष्टसमयप्रतिपाल-नाय दुरंतदुरितदूरीकरणाय च समुचितेष्टदेवतानमस्कारपूर्वकमभिधेयप्रयो-जनसंबन्धबन्धुरां प्रथमगाथामाह—

सयलसमीहियकरणं रिसहजिणं पणमिऊण णाणघणं ।
दाणोवएसमालं भणामि मंगलमणीसालं ॥१॥

अन्तः— अथ ग्रन्थसमाप्तौ कविनामगर्भां मंगलाशिषमाह—
इह संघतिलयगणहरसीसेण दिवायरेण रइएयं ।
दाणोवएसमाला कंठगया कं ण भूसेइ ॥१०॥

समाप्ता चेयं दानोपदेशमालाप्रकरणवृत्तिः ॥

विक्रमादित्यतोऽष्टेंदुवार्द्धीन्दु(१४१८)मितवत्सरे ।
चक्रुर्देवेन्द्रसूरीन्द्रा वृत्तिमेतां मनोहराम् ॥१॥

यदिह मया मतिमांद्यात् किमप्यसंबद्धभाषणं व्यरचि ।
तच्छोधयन्तु सुधियो दयामया मयि दयां कृत्वा ॥२॥

एतत्प्रकरणविवरणकरणाद् यदनघमर्जितं मया ।
तेन मम निखिलमंगलदायी वरबोधिलाभोस्तु ॥३॥

यावन्नभः सरसि तारकपद्मभाजि
सद्राज[हं]सयुगलं खलु खेलतीह ।
तावन्मुनीश्वरगणाः परमादरेण
टीकामिमामनुपमां परिशीलयन्तु ॥४॥

अस्य ग्रन्थस्येयं संख्यास्ति ख-ख-[बाण]-बाणेति(५५ ०) संख्यास्ति ॥
ग्रन्थाग्रन्थभाषायाम् ५५०० ॥

श्रीवृद्धगच्छे वादीन्द्राः श्रीमुनीश्वरसूरयः ।
तेषां विनेयो व्यलिखन्मुनिहर्षः सहर्षधीः ॥१॥

श्रीविक्रमार्क्कसमयाद् युग-दिग्गज-सागरेन्दु(१४६४)मितशरदि ।
स्वश्रेयसे कृतेयं पुस्तकरचना चिरं जीयात् ॥२॥

संपूर्णं समाप्तम् ॥

संवत् १९६५ रा मिति चैत्रकृष्णपक्षतीथी ६ षष्ठमी शनिश्चरवार इति संख्ये वर्षे बाणांग-नवेन्दु(१९६५)चेत्रकृष्णपक्षस्य षष्ठ्यां शनिश्चरवारे मूलचन्दशर्मा लिखेत ॥

[ 2727 ] अन्तः— इति श्रीपंचनिर्ग्रंथीटबार्थ संपूर्णः समाप्तः ॥
संवत् १९३७ ना वर्षे ज्येष्ठवदीसप्तम्यां रवीवारे ।

स्त०अन्तः— श्रीनयविजयगुरूणां प्रसादमासाद्य सकलकार्यकरम् ।
व्याख्यां कुर्वे कांचिल्लोकगिरा पंचनिर्ग्रन्थ्याः ॥१॥

नमिनइं श्रीमहावीरप्रतइं भव्यमइं हितने अर्थइं संक्षेपथकी कांइंक कहिसिं स्वरूप हुं पुलाकप्रमुष साधुनुं ॥१॥

स्त०अन्तः— भगवतिनां २५ पचवीसमा शतकनि छठ्ठा उद्देशानि नियंठानि संग्रहणिए अभयदेवसुरिइं रचि भावार्थ संभारवानेंऽर्थइं ॥१०८॥

श्रीनयविजयगुरूणां चरणाम्भोपासनादुरितपुण्यः ।
पुण्याय यशोविजयो व्यातेने बालबोधमिमम् ॥१॥

यद्यपि गीर्नं ममेयं कर्णाभरणमावलिर्मन्दमतीनाम् ।
तदपि प्रवचनभक्तिः पदकिंकिणिका भवत्वेवम् ॥२॥

इति श्रीपंचनिग्रंथीटबार्थः संपूर्णः समाप्तः ॥ लिपिकृतं बाबा बालगिरजी ग्रंथाग्रंथम् ५०० ॥

[ 2734 ] व्या०आदिः—सम्यक्त्वं नयसारनाम विदितः श्रीप्राप्तचिंतामणी–
यैः संप्राप्य सुरद्रुमाधिकमहःश्रीस्वर्गमुख्येंदिराः ।
पद्माभा उपभुज्य जैनकमलामासाद्य पुण्योपमां
श्रीकैवल्यफलश्रियं निरुपमां भुंक्ते स वीरः श्रिये ॥१॥

श्रीजिनेश्वरसूरीणां नत्वा पादसरोरुहम् ।
पंचलिंगीप्रकरणविवृतिर्लिख्यते मया ॥२॥

इह गूर्ज्जरवसुंधराधिपश्रीदुर्लभराजसभासभ्यसमाजमहावादिचैत्यवासिककल्पितजिनभवनवासपरास्तसमासादितविसृत्वरकीर्त्तिकर्पूरपूरसुरभितत्रिभुवनभवनभोगश्रीजिनेश्वरसूरिविरचितपंचलिंगाख्यप्रकरणस्य यद्यपि प्रतिवादिदंतिकुंभस्थलकेशरिभिः श्रीजिनपतिसूरिभिर्नानाप्रमाणावलीरवसुन्धरा विद्वज्जनमनोहरा वृत्तिर्निर्म्मिता तथापि संक्षिप्तरुचिसत्त्वानुग्रहाय तद्व्याख्यानुसारेण किंचिल्लिख्यते मया ।

टीकापुष्पिका —

इति पंचमं लिंगं विवृतम् तद्विवृतौ समाप्तं पंचलिंगीप्रकरणविवरणम् । इति वसतिमार्गप्रकाशकयुगप्रवरागमश्रीजिनेश्वरसूरिविरचितस्य पंचलिंगाख्यप्रकरणस्य श्रीजिनचन्द्रसूरि–पट्टपद्महस्तीश्रनिषादिराजश्रीजिनपतियतिराजविनिर्मितसविस्तरसहृदयतार्किकचक्रिचक्रमनोहरसद्वृत्तितः संक्षिप्तरुचिमंदमेधाविनेयजनानुग्रहाय श्रीजिनेश्वरसूरिशिष्यलेशेन वा०सर्वराजगणिना श्रीजेसलमेरुस्थितेन प्र०बुद्धिसमृद्धिगणिन्यभ्यर्थनया संक्षेपेणेदं विवरणं समुद्धृत्य तदनुसारेण लिखितं शोधितं च पं०पद्मकीर्तिगणिना सर्वैश्रुतधरैरत्रार्थे मय्यनुग्रहो विधेयः । तथा—

खरतरसमयज्ञानांजलिं संविधाय
अवनतिविनययुक्तोऽभ्यर्थयेऽभ्यर्थनीयान् ।
निखिलगुणसमेतं दोषलेशप्रमुक्तं
विवरणमिदमत्राधस्त संशोध्य पूज्याः ॥१॥

सुकृतलव इतो मे दुर्गदौर्गत्यहारी
सुपदविभवसारः प्रादुरासीन्निधियः ।
विलसतु भविकौघस्तेन सम्यक्त्वलक्ष्म्या
त्रिभुवनवरसद्मासख्यसंभूषितांग्या ॥२॥

[ 2770] मू० अन्तः— इति भवभावनाप्रकरणं समत्तं पठनार्थं स्वपरमंगलमाहेश्वरी। संवत् १५६४ वर्षे आसोवदिद्वितीयातिथौ ॥

**अथ०अन्त्यः**— श्रीविक्रमतो देवेन्द्रतिथि(१५६४)प्रमिते वर्षे आर्जिकमासे शुक्लपक्षे पूर्णिमातिथौ चन्द्रजवासरे मुनिना राजवल्लभेन श्रीअवचूर्णिलिखिता पठनार्थं मंगल माह० ।

[2797] **आदिः**— नमः सर्वज्ञाय ॥

बाल्ये शैलराजं बल[व]दखिलधरामंडलं कंपयित्वा
शुद्धं सम्यक्त्वरत्नं सुरविसुरपतेर्मानसे यश्चकार ।
तं नत्वा वर्द्धमानं चरमजिनपतिं मूलशुद्धेः स्वशक्त्या
स्पष्टं व्याख्यां विधास्ये निजगुरुचरणद्वन्द्वसद्भक्ति(त्)योगात् ॥१॥

अत्र सुगृहीतनामधेयो भगवान् श्रीमत्प्रद्युम्नसूरिः ।

**अन्तः**— सिद्धंतसाराणमिणं महत्थं बुद्धाण भव्वाणमणुग्गहत्थं ।
महामईए च महन्तमत्थं पज्जुन्नसूरीवयणं पसत्थं ॥

इति श्रीदेवचन्द्राचार्यविरचितं मूलशुद्धिस्थानकविवरणं समाप्तमिति ॥

आसीच्चन्द्रकुलांबरैकशशिनि श्रीपूर्णतल्लीयके
गच्छे दुर्द्धरशीलधारणसहैः संपूरिते संयतैः ।
निःसंबन्धविहारहारिचरितश्चश्चच्चरित्रः शुचिः
श्रीसूरिर्मलवर्जितोर्जितमतिश्चार्वाह्रदेवाभिधः ॥१॥

तच्छिष्यः श्रीदत्तो गणिरभवत् सर्वसत्त्वसमचित्तः ।
नरनायकादिचित्तः सद्वृत्तो वित्तनिर्मुक्तः ॥२॥

सूरिस्ततोभूद् गुणरत्नसिंधुः श्रीमान् यशोभद्र इतीद्धसंज्ञः ।
विद्वान् क्षितीशैर्नुतपादपद्मः सन्नैष्ठिको निर्मलशीलधारी ॥३॥

नीरागोपि विधानतो निजतत्त्वं (? मतं) संलिख्य सर्वादरात्
सर्वाहारविवर्जनादनशनं कृत्वोज्जयन्ते गिरौ ।
कालेणा(ना)त्र कलौ त्रयोदशदिनाद्याश्चर्यहेतुर्जने
शस्यं पूर्वमुनीश्वरीयचरितं संदर्शयामास यः ॥४॥

तच्छिष्यो भूरिबुद्धिर्मुनिवरनिकरैः सेवितः सर्वकालं
सच्छास्त्रार्थप्रबन्धप्रवरवितरणाल्लब्धविद्वत्सु कीर्त्तिः ।
येनेदं स्थानकानां विरचितमनघं सूत्रमत्यंतरम्यं
श्रीमत्प्रद्युम्नसूरिर्जितमदनभटोभूत् सतामग्रगामी ॥५॥

राद्धान्त-तर्क्क-साहित्य-शब्दशास्त्रविशारदः ।
निरालंबविहारी च यः शमांबुमहोदधिः ॥६॥

सिद्धांतदुर्गममहोदधिपारगामी
कन्दर्प्पदर्प्पदलनोनघकीर्त्तियुक्तः ।
दांतातिदुर्गमहृषीकमहातुरंगः
श्रीमांस्ततः समभवद् गुणसोमसूरिः ॥७॥

जगत्यपि कृताश्चर्यं सुराणामपि दुर्लभम् ।
निशाकरकराकारं चरित्रं यस्य राजते ॥८॥

तच्चरणरेणुकल्पः सूरिः श्रीदेवचन्द्रसंज्ञोभूत् ।
तच्छिष्यो गुरुभक्तस्तद्विघधिषणो विनिर्मुक्तः ॥९॥

किंच—श्रीमदभयदेवाभिधसूरेर्यो लघुसहोदरः ।
स इह स्थानकवृत्तिं चक्रे सूरिः श्रीदेवचन्द्राख्यः ॥१०॥

मतिविकलेनापि मया गुरुभक्तिप्रेरितेन रचितेयम् ।
तस्मादियं विशोध्या विद्वद्भिर्मयि कृपां कृत्वा ॥११॥

आवश्यकसत्पुस्तकलेखनजिनवन्दनार्चनोद्युक्तः ।
शय्यादानादिरतः समभूदिह वीहकः श्राद्धः ॥१२॥

तद्गुणगणानुयायी श्रीवत्सस्तत्सुतः समुत्पन्नः ।
तद्वसतावधिवसता रचितेयं स्तंभतीर्थपुरे ॥१३॥

रस-युग-रुद्रै(११४६)र्वीतैर्विक्रमसंवत्सरात् समाप्तेयम् ।
फाल्गुनसितपंचम्यां गुरुवारे प्रथमनक्षत्रे ॥१४॥

अणहिलपाटकनगरे वृत्तिरियं शोधिता सुविद्वद्भिः ।
श्रीशीलभद्रप्रमुखैराचार्यैः शास्त्रतत्त्वज्ञैः ॥१५॥

साहाय्यमत्र विहितं निजशिष्याशोकचन्द्रगणिनाम्ना ।
प्रथमप्रतिमालिखता विश्रामविवर्जितेम भृशम् ॥१६॥

प्रत्यक्षरं निरूप्यास्या ग्रंथमानं विनिश्चितम् ।
अनुष्टुभां सहस्राणि संपूर्णानि त्रयोदश ॥१७॥

अंकतोपि सहस्रग्रंथाग्रम् १३००० ॥

साहश्रीवच्छासुतसाहसहस्रकिरणेन पुस्तकमिदं गृहीतं सुतवर्द्धमानशांतिदासपरिपालनार्थम् ।

[2800] अन्तः— सिद्धविग्गवग्गमायर पभणिअ सिरिदेवसूरि उद्धरिआ ।
आव रविदिवसतरिआ ता जयउ जईण दिणचरिया ॥१९॥

॥ इति श्रीसुविहितसि(शि)रोमणिश्रीदेवसूरिविरचिता यतिदिनचर्या संपूर्णा ॥

संवत् १६०८ वर्षे शाके १४७४ प्रवर्तमाने वैशाखमासे शुक्लपक्षे १३ शुक्रे खाणसमावास्तव्यश्रीश्रीमालज्ञातीयश्रेष्ठिहरषाभार्यालखमाई-हासा-धनासहितम श्रीपूर्णिमापक्षे प्रधानशाखीयभट्टारकश्री६-कमलप्रभसूरिपट्टे भट्टारकश्री ६ पुण्यप्रभसूरीणां प्रदत्तं श्राविका लखमाई स्वपुण्यार्थं वाच्यमानं चिरं नन्दतु ॥

[ 2803 ] आदिः— श्रीवीतरागाय नमः ॥

प्रणम्य जगदानन्दवृन्दकन्दकवृजिनम् ।
श्रीपार्श्वं दिनचर्याया वक्ष्ये व्याख्यां ससूत्रगाम् ॥१॥

शांतिस्तनोतु सततं कृतपा[प]शांतिः
शांतिजिनोऽथ जलसंततिसागरांतिः ।
ख्यातिः क्षितौ क्षितिपतौ किल यस्य लोके
धर्माधिपे च भुवि गर्ज्जति संप्रति यः ॥२॥

यत्राभूद् गणभृत्प्रभावनिधिभृत् केशी प्रदेशी लसत्–
सत्सम्यक्त्वगुणाप्तिज्ञप्तिपदकृत् स्वर्गर्द्धिसंयच्छकः ।
तस्यैतद्दिनकृत्यमेतदखिलं गच्छस्य चान्यस्य च
व्याख्याबोधिनिबन्धनं गणधरस्याहुर्न ये सुव्रतः ॥३॥

अथार्या—दिनचर्या श्रुतधुर्या कृतवान् श्रीभावदेवसूरिवरः।
सुकरां तनुते रम्यां मतिसागर एषः तद्वृत्तिम् ॥४॥

अन्तः— समाप्ता यतिदिनचर्यावचूरिर्लिखिता ॥ सं० १९५६ श्लो० (?) पो० सुदी ८ वार सुकरवारे ॥ श्रीमद्राजनगरे वरे ॥

[ 2806 ] अन्तः— इति न्यायविशारदविरचितं सामाचारीप्रकरणं संपूर्णम् ।

श्रीधनविजयाह्वानैर्वाचकवर्यैरशोधि तत्कालम् ।
प्रकरणमिदं प्रमुदितश्रीपूज्यानां निदेशेन ॥१॥

[ 2808 ] आदिः— केवलं अथ सरूवं लोअग्गपयट्ठिअं जिणं वीरं ।
पणमित्तु पयत्थेमी निअजीवणुसासणं किंचि ॥१॥

[ 2809 ] अन्तः— आसीदत्र महामुनिश्च विजयानन्दाख्यसूरीश्वरः
श्रीलक्ष्मीविजयाह्वयश्च सुगुणस्तस्याजनि शिष्यकः ।
तच्छिष्यस्य मुनीशहंसविजयस्यात्रोपदेशेन च
ग्रंथोयं लिखितो बभूव भवीनां मोक्षाख्यशर्मोपदः ॥१॥

[ 2812 ] अन्तः— संवत् १६६९ वर्षे श्रीअंचलगच्छे पं०श्रीक्षि(क्ष)माकीर्त्तिगणि-शिष्य वा०श्रीराजकीर्त्तिगणि-पं०श्रीगुणवर्द्धनगणि–शिष्यश्रुतकीर्त्तिलिखितं श्रीपारकरनगरमध्ये ऋषिविद्याकीर्त्ति-ऋषिहर्षकीर्त्तिसहितैः ।

[ 2814 ] मू०आदिः—श्रीगुरुभ्यो नमः ॥

नमिऊण जिणवरिन्दे उवयारट्ठा गुरुं व सीसं च ।
सिद्धंतसारगाहा भणामि जे रयणसारित्था ॥१॥

अन्तः— इति श्रीरत्नसंचयग्रंथ[:] संपूर्णः ॥

पर्वत-वसु-मुनि-शशि(१७८७)एकांत, संवतनो ए कहो विरतांत ।
द्वितीय भाद्रव श्वेत पक्ष जान, तिथि द्वादशी शनिवार बखान ॥१॥

श्रीमदंचलगच्छेशाः श्रीविद्यार्णवसूरयः ।
तेजःप्रतापप्रबला विचरंति महीतले ॥२॥

तच्छिष्येण प्रमोदेन लिखितं रत्नसंचयम् ।
निधानाद्याध्ययनार्थं मुनिना श्रीहिताब्धिना ॥३॥

यह पुस्तक हेतें करो, लिख्यो जु मुनिहित राय ।
बाचत हित सुख उपजें, शिवपुरको हित थाय ॥४॥

मगलमाला अतिघणी, ज्ञानें लच्छि विशाल ।
पढो गुणो ए सांभ(ल)ो, वांचो चित धरी शाल ॥५॥

श्रेयसे भवतात् ।

[ 2815 ] **मू०अन्तः**— इय चक्कियतणुमाण हरिसेणो जयस्स बंभदत्तस्स ।
पन्नरस बारस सत्त धणु गाहा आगमे भणिआ ॥४४॥

इति श्रीरत्नसंचयग्रंथः संपूर्णः ।

**स्त०अन्तः**— इह चक्रवर्त्तिनो देहमान हरिषेणचक्री धनुष १५, जयचक्रीनो देहमान धनुष १२, ब्रह्मदत्तचक्रीनो देहमान धनुष ७ ए सर्वगाथा आगमने विषे कही ४४ मंगलं—रत्नसंचयसंग्र[ह]टबार्थो संपूर्णः ।

संवत् १७८५ ना वर्षे शाके १६५० ना प्रवर्त्तमाने काती वद ८ दिने श्रीबुधवासरे सकलपण्डितशिरोमणिपण्डित श्री५नी(नि)त्यचन्द्रगणि शिष्यप०श्री५जयचन्द्रगणि-शी( शि )ष्यपं०श्री५श्रीप्रीतिचन्द्रगणिना लिखितं चेलाग०जिनचन्द्रवाचनार्थम् । श्रीश्रेआ(यां)सनाथप्रशा(सा)दात् श्रीवागडदेशमध्ये श्रीआडीसरनगरमध्ये ॥

[ 2816 ] **अन्तः** –इति श्रीतपागच्छाधिराज्येन परमगुरुश्रीसोमसुन्दरसूरि–श्रीजयचन्द्रसूरि–श्रीरत्नशेखरसूरि–श्रीलक्ष्मीसागरसूरि-श्रीसुमतिसाधुसूरिपट्टालंकरणसंप्रतिविजयमानपरमगुरुश्रीहेमविमलसूरिविजयमानराज्ये श्रीमालकुलकमलहंसमालवाधिपश्रीखलचीश्रीग्रयासदीननृपकोशाधिकारीलघुशालिभद्रबिरुदधारिश्रीजावडाभ्यर्थनया पण्डितप्रकाण्डमण्डलीशिरोमणिपं०श्रीसाधुविजयगणिशिष्याणुना पण्डितशुभवर्द्धनगणिप्रणीतायां श्रीवर्द्धमानदेशनायाम् ॥ ५०० ॥

श्रीः सर्वतः स्फुरति यत्प्रणतेरितीव
मत्वा जय कपटतः प्रथितद्विरूपा ।
तच्छकितमार्गणकृते शितिचित्रवल्ली
शिश्राय य भवतु नाभिभवः स भूत्यै ॥१॥

श्रिया समृद्धः किल मालवाख्यदेशः कथं कस्य न वर्णनीयः ।
समग्रदेशागतदुःखिलोकान् यः पालयत्यात्मपितेव शश्वत् ॥२॥

तत्राखिलश्रीललनाविलासा लीलालयो मण्डपदुर्ग एषः ।
विभाति निश्शेषवसुन्धरायाः सारस्य पिण्डो विधिना कृतः किम् ॥३॥

प्रौढावहे नतरिपुक्षितिपालबाला नेत्राश्रुवर्द्धितमहोभरशालिसालः ।
स्वीयश्रिया तु कृतवासवराज्यसंपत् भूमिपतिर्विजयतेत्र गयासदीनः ॥४॥

पात्रैरमात्रैः सुभगः सुपर्वशाली गुणालिकलितः समन्तात् ।
श्रीमालवंशः शुभतीह तत्तन्नृरत्नमुक्ताफलमण्डितश्रीः ॥५॥

उदाभिधस्तत्र सुधीर्महेभ्यमुख्योभवन्नान्दिलगोत्ररत्नम् ।
जाया तदीया डहरीति जैनधर्माम्बुधेः सल्लहरी वरेण्या ॥६॥

श्रीक्षेमराजः समभूद् विभूतिपदं तदीयस्तनयो यशस्वी ।
पुंजीति धर्म्मादिगुणैकपुंजीभूता सुशीला दयिता तदीया ॥७॥

तदंगभूर्भूरियशोविशुद्धीकृताखिलाशाजनि छापराजः ।
चांपूहृदंभोरुहराजहंसः सौभाग्यभाग्यैः स्वकुलावतंसः ॥८॥

जज्ञे ततः श्रीजगसिंहनाम धामाभिरामः कमलाविलासी ।
गाम्भीर्यधैर्यादिगुणालिशाली माउमनोम्भोजगभस्तिमाली ॥९॥

गाम्भीर्यौदार्यधैर्याद्यनणुगुणमणीसागरश्रीजिनाज्ञा-
पूतात्मा स्वार्जितार्थप्रकरजिनमतोद्द्योतकृत् कान्तकीर्त्तिः ।
श्रीगोल्हाह्वस्तदीयस्तनुजनुरमितश्रीनैराधीशमान्यः ।
सामांप्राणप्रियाभूत् भुवि सकलनिजज्ञातिशृङ्गारकारी ॥१०॥

तद्भूः श्रीमहिमूदभूपतिसभालब्धप्रतिष्ठोदयः
स्फूर्जत्कीर्त्तिलतावितानपिहितश्रेणीमहामण्डपः ।
संघेशः समभूद् विभूतिवसतिः श्रीराजमल्लः कृती
सांगूस्तस्य जनी वनीपकवती कादम्बिनी पाविनी ॥११॥

यो निन्ये सुमनांस्यहो! प्रतिदिनं धर्माभिमुख्यं क्षणात्
दूरे सन्तु सुदृष्टयः कुमतिनां मिथ्यात्वभाजामपि ।
द्वात्रिंशन्मितटङ्कटङ्कसहस्राणां व्ययात् कारितो
लक्ष्मीसागरसूरिराजसुगुरोर्येन प्रवेशोत्सवः ॥१२॥

तत्पुत्रः परमार्हतः 'सुकृतिनां धुर्यासरेखः स्फुरत्-
तारस्फारयशोभरः प्रतिदिनं दाता सुभोक्ता श्रियाम् ।
कारुण्यैकनिधिर्गयासनृपतेः प्रौढप्रसादावधि-
स्तत्तादृग्गुणसेवधिर्विजयते श्रीजावडेन्द्रः कृती ॥१३॥

एकां रत्नमयीं गिरौ जिनपतेर्मूर्तिं पुरास्थापयत्
प्राग्वाटः [सुमति]प्रभावजलधिः सौराष्ट्रिको जावडः ।
मूर्त्तीः रूप्य-सुवर्ण-पित्तलमयीः संस्थापयन्नैकशो
न स्यादभ्यधिकः कथं तत इह श्रीजावडेन्द्रो ह्यसौ ॥१४॥

वापी-कूप-सरोवरादिषु जलस्थानेषु दीव्यद्दया-
हेतोर्येन बबन्धिरे गलनकान्यामन्वतः सर्वतः ।
स श्रीजावडसंघपः कृतयुगस्यैवावतारं कलौ ।
कुर्वाणः कमनीयतां कथमसौ नो याति पुण्यैः स्वकैः ॥१५॥

श्रीसुमतिसाधुसुगुरोरुपदेशं प्राप्य सुविधिना येन ।
जगदाश्चर्यकरः श्रीजिनप्रतिष्ठोत्सवं चक्रे ॥१६॥

जीवादे-खीमादे-सुहागदेव्यश्च तद्भार्याः ।
आभिर्भार्याभिरयं भाति सुमेरुर्यथा दिग्भिः ॥१७॥

श्रीमद्धनाई[? शुभ]कुक्षिवार्द्धिजैवातृकः सर्वकलाभिरामः ।
श्रीहीरनामा तनुजस्तदीयः सौभाग्यभाग्यादिगुणैः प्रधानः ॥१८॥

इति सारपरीवारपरितो जावडः सुधीः ।
अकारयदिदं शास्त्रं स्वान्योपकृतिहेतवे ॥१९॥

क्षेत्रं पवित्रं किमवापयन्मुदा शास्त्रच्छलाज्जावडसंघनायकः ।
धर्म्मार्थी प्रशस्यश्रियमाप्य सर्वदा के के न तृप्तिं परमां च यान्त्यलम् ॥२०॥

मुक्ताहारलता सतामभिमता श्रीवीरसद्देशना-
रूपा जावडसंघपेन रुचिरा तन्वद्गुणैः कारिता ।
कण्ठे यामधिरोप्य कः सुकृतिनां धुर्यो वरीयान् पुमान्
कामं न स्पृहणीयतामयति सन्मुक्तिश्रिय· सर्वदा ॥२१॥

श्रीमत्तपागणेन्द्राः सोमसुन्दरसूरयः ।
मुनिसुन्दरसूरीन्द्राः श्रीजयचन्द्रसूरयः ।२२॥

श्रीरत्नशेखराचार्याः लक्ष्मीसागरसूरयः ।
श्रीसुमतिसाधुसूरीश्वराश्च सुखदायिनः ॥२३॥

संप्रति जयन्ति शशिगुणश्रीहेमविमलसूरीन्द्राः ।
श्रीइन्द्रनन्दिगुरवः सूरीन्द्रा कमलकलशाख्याः ॥२४॥

सूरीश्वरा इमे सर्वे शुद्धाचारजुषः सदा ।
संघेशजावडेन्द्रस्य कुर्वन्तु [वः] सुखं शान्तिम् ॥२५॥

तस्मिन् निपुणाः श्रीजिनहर्षनामसत्पण्डिताः खण्डितवादिगर्वाः ।
श्रीविंशतिस्थानचरित्र वस्तुपालप्रबन्धादिकृतावखर्वाः ॥२६॥

तच्छिष्या विबुधेन्द्रसाधुविजयाख्याः ख्यातिमन्तो गुणैः
जेतृवादिविनोदिवादिविजयग्रन्थादिसद्वेधसः ।
तच्छिष्यः शुभवर्द्धनोऽल्पमतिकः श्रीजावडाभ्यर्थनां
प्राप्यैनामिह देशनां व्यरचयत् श्रीवर्द्धमानप्रभोः ॥२७॥

यावच्चन्द्र-दिवाकरौ निजकरैः सद्भासयेतां भुवं
यावत् तृप्यति वारिभिर्जलधरो धत्ते फणीन्द्रो फणैः ।
श्रीमज्जावडसाधुकारितमिदं श्रीवीरसद्देशना-
शास्त्रं पुण्यपयोनिधिजिनमते तावच्चिरं नन्दतात् ॥२८॥

इति श्रीवर्द्धमानदेशना संपूर्णा ॥६॥ याद्दशं० ॥

श्रीमदूकेशगच्छे भट्टारिकश्री ६ सिद्धसूरिसंताने महोपाध्या(य)-
श्रीदेवसुन्दर-तत्पट्टे वा०श्रीज्ञानसुन्दर-तच्छिष्यचांपालिपीकृतं आनामध्ये ।

[2826] **आदिः—** जियरागदोसेणं सिरिवीरजिणेसरेण जह सिद्धा ।
सेणियरन्नो दुलहा दुवालसंगी तह कहेमि ॥१॥

**अन्तः—** एसा दुवालसंगी संपत्ता जेहिं जिणवरुद्दिट्ठा ।
जायंति ते कयत्था तिलोयचूडामणी सुहिणो ॥१॥

जयसिंहसूरिगुरुणा सुयंबतरुगहणसमहिरूढेण ।
उवएसरसफलाइं खित्ताइं पुत्तसिनिहेणं ॥२॥

मज्झाओ ताणि काणि वि पगरणपिडयंमि एत्थ चिइऊणं ।
सिरिपउमदेवसूरिहिं ढोइयाइं जणहिताय ॥२॥

मइमंदयाइ जं किंचि विरइयं सुत्तमग्गमइकम्मं ।
तं सोहिय सुयनिहाणो समत्थलोगे पयासंतु ॥१॥

**वृ०आदिः—** श्रीपार्श्वनाथाय नमः ॥ श्रीगुरुभ्यो नमः ॥

भव्याम्भोरुहबोधनैकपटुभिः स्वैरंशुभिर्वाङ्मयै-
र्येनान्तस्तिमिरं विधूय विदधे वस्तुप्रकाशः परः ।
निस्सीमप्रथितप्रतापमहिमा नित्यप्रवृत्तोदयः
स श्रीवीरजिनस्त्रिलोकतरणिः श्रेयांसि पुष्णातु वः ॥ १ ॥

गीर्देवता दिशतु वः श्रुतवर्त्म यस्या
ज्योतिर्मयैरिव मुखेन्दुभिरुदंशुजालैः ।
अंतःस्फुरद्धृदयकन्दरसंचरिष्णुः
मुष्णाति विभ्रमतमः प्रणिधानभाजाम् ॥ २ ॥

जगद्वन्द्यैस्तैस्तैर्गणधरगुणौघैस्तिलकितान्
गुरून् वन्दे प्रीतः श्रुतजलधिपारप्रणयिनः ।
शिशुप्रेम्णा सोऽहं निबिडजडिमग्रन्थिरपि यैः
प्रसादस्मेराक्षैर्विबुधपदवीं लम्भित इमाम् ॥ ३ ॥

श्रीपद्मदेवाभिधसूरिपुंगवैः स्फुटं निबद्धस्य यथोपदेशतः ।
विरच्यते साधु विवेकमञ्जरीनाम्नः प्रबन्धस्य मया विवेचनम् ॥ ४ ॥

वृ०अंतः— इति श्रीपद्मदेवप्रभसूरिविरचिता विवेकमञ्जरीसूत्रवृत्तिः समाप्ता ॥

आसीच्चन्द्रकुलावतंसकरिणश्चारित्रचूडामणिः
श्रीहेवाख्यमुनि(?नी)श्वरस्तदनु च श्रीनेमचंद्राभिधः ।
तस्यो[द्]द्योतननामकोजनि यशोदेवाख्यसूरिस्ततः
सर्वांगीणगुणौघरत्नजलधिः श्रीसर्वदेवाह्वयः ॥ १ ॥

एतस्मा[ज]ज्जयसिंहसूरिरखिलाचार्यावलिग्रामणी—
र्जज्ञे धर्मविधेः प्रबन्धनिपुणश्रेष्ठो विशिष्टाशयः ।
दीप्यद्दीपशतैरिवामलहरै रत्नैरिवार्णोपते—
र्यस्मादु[ज्]ज्वलशिष्यरत्नविरहैर्भूयोभिरभ्युद्गतम् ॥ २ ॥

शिष्यास्तस्य तरोरिवायतचतुःशाखोपमामा इमे
श्रीचंद्रप्रभू(?भ)सूरिरित्यघरयश्रेणीच्छिदां कुञ्जरः ।
श्रीभद्रेश्वरसूरिरद्भुतगुणश्चारित्रिणामग्रणी[:]
श्रीमच्छीलगणप्रभुर्गणधरः श्रीपद्मदेवाभिधः ॥ ३ ॥

तत्राद्यः कलिकालकुञ्जरकराक्रान्तागमैका स्थितिः
क्षोणीपालसुतप्रपालनपटुः श्रीचंद्रसूरिप्रभुः ।
रत्नाधारतयात्मनि प्रमुदिता धात्री क्षितीशाग्रतो
यद्वादीन्द्रजयक्षणेऽङ्कुरमिषादुर्वासु रोमांचिता ॥ ४ ॥

तत्पट्टे च युगप्रधानगणभृच्चूडामणेर्विश्रुतः
स्या[द्वा]दीन्द्रविचित्रदुष्करतपश्चारित्रपूतात्मनः ।
स्पृष्ट्वा तं जयसिंहभूपतिरहो यस्यांह्रिपद्मद्वयीं
दुःखादुद्धृतवानभूदिह विभुः श्रीधर्मघोषाभिधः ॥ ५ ॥

पूज्यः श्रीजयसिंहनामगणभृत्पट्टप्रतिष्ठोदयाः
श्रीमच्चन्द्रकुलाद्यमूलसुहृदः सौहार्दलीलाभुवः ।
सश्रीकः प्रभुपद्मदेवगुरवो यन्नाम संस्मर्यते
मन्त्रादप्यतिशायिपर्वणि जनैर्दुःखासिकाबामपि ॥ ६ ॥

तत्पट्टप्रथितोदयाः समुदिताः श्रेयःपरिस्फूर्तये
जायन्ते च यशस्विनः कलियुगश्रीगौतमस्वामिनः।
श्रीदेवप्रभसूरिपूज्यचरणा येषां चरित्रावलीं
श्रुत्वा कम्पयते न मस्तकमहो कस्को जनः क्ष्मातले ॥ ७ ॥

पद्मदेवाभिधाः पूज्या द्वादशांगीप्रकाशकम्।
विवेकमञ्जरीसूत्रं सूत्रयामासुरु[ज्]ज्वलम् ॥ ८ ॥

श्रीदेवप्रभसूरिभिर्विवरणग्रन्थेऽर्द्धनिर्मापिते
स्वर्गं प्राप्नुवतां च तत्रभवतां तेषां समादेशतः।
सश्रीकेवकलंकदेवमुनिपैः पूज्यप्रसादादयं
चिन्तारत्नसहोदरैः शुभकृते निष्ठां परां लम्भितः ॥ ९ ॥

अद्वैतश्रुतवैभवव्यतिकरे[:] श्रीमन्महेन्द्रप्रभा-
चार्यैः शोधित एष निर्मलतमप्रज्ञाविलासै(सै)स्तथा।
श्रीशान्तिप्रभसूरिभिश्च यदिह स्याद् दुष्टमज्ञानत-
स्तत् सर्वं परिसो(?)शोधयन्तु सुधियः सिद्धान्तशुद्धाशयाः ॥ १० ॥

सुविनीतभक्तवाचकविशालकीर्तिगणिसाधुशिष्यस्य।
एकान्तिकर्त्तानिध्याद् बन्धोस्माभिः समाप्तोयम् ॥ ११ ॥

पण्डितहेमप्रभगणिशोधन-लिखनाद्यनेकसाहाय्यात्।
अन्त्यसहश्रा(?स्रा)श्चाष्टौ रचिता दिव्येन साहाय्येन ॥ १२ ॥

*श्रीमद्विक्रमभूपतेरतिगते लेश्याजगत्सौगता-*
भिप्रेतायतनप्रमाणसमये (१६१६) ? संघप्रसादादयम्।
शुक्ले कार्त्तिकमासि मूलतरणौ सत्पंचमीवासरे
लक्ष्मीवत्यणहिल्लपाटकपुरे प्राप्तः प्रतिष्ठां पराम् ॥ १३॥

इति श्रीविवेकमञ्जरीसु(?सू)त्रवृत्तिः संपूर्णा।

**स्त० आदिः—** *श्रीमत्पार्श्वजिनं नत्वा श्रीगोडि(डी)श्वरसंज्ञकम्।*
श्रीविवेकमञ्जरीग्रंथस्यार्थोऽयं लिख्यते मया ॥ १ ॥

**स्त० अन्तः—** श्रीमान् विक्रमादित्य राजा थकी गयें थके छ लेश्या जगत् बौध-दर्शनें मान्या जे घरनां (?) प्रमाण संख्यनें समयें संवत् १६१६वर्षे(?) श्री चतुर्विधसंघना महिमाथी ग्रंथ उज्ज्वल पक्षे कार्त्तिकमासें रविवारें भली पंचमीने दिवसें संपदावंत जे अणहिल्लपाटकनगरने विषें पाम्यो संपूर्णता उत्कृष्टी प्रतें सर्व पूरो थयो ॥ १३ ॥

ए रीते श्रीविवेकमञ्जरीसूत्रनें वृत्ति संपूर्ण थयुं।

श्रीपण्डितश्री१०८ श्रीमंत पं० नेमविजयगणि-तत्शिष्यपण्डित-प्रवरश्री१०५ श्रीपं० न्यायमविजयगणि-तत्शिष्यपं० भक्तिविजयपं० चतुर्विजय-

मु॰मोतीविजय श्रणे मली ए पुरुं कर्युं छइ । श्रीखाणसमामध्ये श्रीमद्देवाजी-प्रसादात् मंगलमालिका वृत्तिः संपूर्णाः संवत् १८५४ ना वर्षे शाके १७१९ प्रवर्समानें मासोत्तममासें शुक्लपक्षे कार्तिकसुदि २ दिनें सनिवारे श्रीखाणसमामध्यें संपूर्ण कर्युं छे ।

[2837] अन्तः— इति अढारशीलांगरथः संपूर्णः ॥

संवत् १७६५ वर्षे कार्त्तिकमासे सितपक्षे नवमी कर्म्मवाट्यां कुजवारे सकलपण्डितशिरोमणिश्रीराकापक्षराजीवविबोधनप्रभापतिसमानपण्डितश्री१९ श्रीमहिमाप्रभसूरि–शिष्यसकलविद्यानिधानपं॰भावरत्नचरणाब्जचंचरीकेण मुनिहेमचंद्रेण लिखितोयं श्रीमत्पत्तनपत्तने ॥

[2913] स्त॰ अन्तः— इति श्रीसंबोधसत्तरि संपूर्णम् ॥

संवत् १८९४ रा मिति ज्येष्ठ वदि १४दिने लिपीकृतं श्रीविक्रमपुरवरे ग्रंथाग्रंथ ९०८।।श्रीः ॥

[2933] अन्तः— सोऽहं वृत्तिं प्रगुरुभिरिमां कर्तुमारब्धमात्रां
तत्पादाब्जस्मरणसहसा मुग्धधीरप्यकार्षम् ।
तद् यत् किञ्चिद् रभसवशतो दृब्धमस्यामशुद्धं
तन् संशोध्यं मयि कृतकृपैः सूरिभिस्तत्त्वविद्भिः ॥ १० ॥

वृत्तिं रचयता चैतां सुकृतं यन्मयार्जितम् ।
भवे भवेहं तेन स्यामर्हद्धर्म्मैकलालसः ॥ ११ ॥

शतद्वादशकेब्दानां गते विक्रमभूभुजः ।
इयं विनिर्ममे वृत्तिः सप्तसप्ततिवत्सरे(१२७७)॥१२॥

अष्टावेव सहस्राणि(८०००) तिष्ठन्त्यस्यामनुष्टुभाम् ।
प्रत्यक्षरेण संख्यानादिति निश्चितवानहम् ॥ १३ ॥

यावद् विजयते तीर्थं श्रीमद्वीरजिनेशितुः ।
तावदेषा मरालीव खेलतात् कृतिमानसे ॥ १४ ॥

एकोप्यनेकतां धर्मो यदागमभटोद्भुतः ।
जयत्येकांतलीलानप्यन्यान् वीरः स वः श्रिये ॥ १ ॥

विद्याधरश्रेणिधरो धरो यद्गुणः क्षमाभृद्गुणवर्णनीयः ।
पूर्वापराम्भोधिरमक्रम(?)श्रीः श्रीमालवंशो रजताद्रिरस्ति ॥ २ ॥

छाडाभिधस्तत्र कीर्त्या विशालः आसीन्न्यासीकृत्य पुण्य स्ववित्तम् ।
सप्तक्षेत्र्यां सर्वलोकप्रसिद्धं चापल्यांकं यः प्रमार्ष्टि स्म लक्ष्म्याः ॥ ३ ॥

बभूव तस्यामितसंगतांगलावण्यलीलाजितकामकान्ता ।
सती प्रिया रांभलीनामधेया ध्येयार्हदंह्रिद्वयपद्महंसी ॥ ४ ॥

गुणैरुदारः सुकृतावतारःपरोपकारव्रतभारसारः ।
तदंगजो भक्तिभरावनम्रो सिंहाभिधानो जयति पृथिव्याम् ॥ ५ ॥

कुलद्वयानंदकरी बभूव तत्प्रेयसी प्रेमवती गुणाढ्या ।
सदा सदाचाररता प्रवीणा सिंगारदेवी जिनधर्मसी(शी)ला ॥ ६ ॥

श्रुत्वा गुरोर्वेलिगसाधुरेवं स्वोपार्जितं सफलं चिकीर्षुः ।
सम्यक्त्ववृत्तेः सुकृतप्रवृत्तेः प्रदीपिका [स्याद्] लघुपुस्तिकेयम् ॥ ७ ॥

कर्णातिथीकृत्य जिनागमस्य रहस्यमुच्चैस्तरभावशुद्धया ।
सद्धर्मतत्त्वार्थनिरूपणाय व्यधापयत् पुस्तकवाचनं सः ॥ ८ ॥

संवत् १४९१ वर्षे आषाढशुदि ८ अष्टम्यां तिथौ सोमवासरे अद्येह श्रीस्तंभतीर्थपुरवास्तव्यश्रीश्रीमालज्ञातीय० सिंघाभार्याश्रा० हेबू-तयोः सुत-ठ० वेलाकेन श्रीसम्यक्त्वप्रकरणवृत्तिपुस्तकं लिखाप्य श्रीश्रीपूर्णिमापक्षीय-श्रीमुनिशेखरसूरितत्पट्टालङ्करणगच्छनायकश्रीश्रीसाधुरत्नसूरीणां निजगुरूणां प्रदत्ता। अद्येह स्तंभतीर्थे वास्तव्यलेखककामदेवेन लिखितम् ॥

[ 2934 ] **मू०आदि:**— पत्तभवन्नवतीरं दुहदवनीरं सिवबतरुकीरं ।
कंचणगोरसरीरं नमिऊण जिणेसरं वीरं ॥१॥

वुच्छं तुच्छमईणं अणुग्गहत्थं समत्थभव्वाणं ।
सम्मत्तस्स सरूवं संखेवेणं निसामेह ॥२॥

**वृ०आदि:** — यद्वक्त्राम्भोजवाप्याः स्फुटवचनघटीयन्त्रधारेण निर्यत्-
सूरिश्रेणिप्रणालीप्रणयिगुरुगुणप्रोच्छलच्छीकरौघः ।
तत्त्वाम्भोयापि सिंचन् सफलयतितमां शासनोद्यानमेतत्
त भक्त्या नौमि नम्रत्रिजगदधिपतिं श्रीजिनं वर्द्धमानम् ॥१॥

श्रुतसारस्य सम्यक्त्वग्रंथस्यार्थगरीयसः ।
सुबोधां वृत्तिमाधास्ये मुक्त्वा संक्षेप-विस्तरौ ॥२॥

किन्तु ग्रन्थेष्वभिज्ञाः शृणुत शुभधियः सावधानं विधाय
स्वान्तं तत्त्वप्रकाशो भवति गुणवति श्रोतरि श्राव्यमाणे ।
तत्त्वाभ्यासानुरागा विरचयितु मां मे मतिः संप्रवृत्ता
कश्चिद् भव्योपकारो यदि परमपरा सा भवेत् पुण्यसिद्धिः ॥३॥

यद्यौतामुपकारिणीं न कल्याम्याश्रित्य बुद्धयाधिकान्
स्पर्द्धा बन्धभृतो बुधान् सममतीनुद्दिश्य आलापिकः(?) ।
ये मात्रापि जना विहीनमतयः किं तैः पुनर्ज्ञास्यते
तां वृत्तिं गुणिनोधुना रचयितुं संदेग्धि तन्मे मनः ॥४॥

किन्तु– 　श्रीचं[द्र]प्रभ[सूरि]गुम्फितगिरामर्थे क्षणे तत्परं
चेतः किञ्च वचस्तदर्थभणनात् पूतात्म संपत्स्यते ।
कार्यस्तस्य विलेखनेन भविता व्यापारसारस्ततः
सिद्ध मे परमार्थतः फलमिदं सत्कर्मलीनात्मनः ॥५॥

वृ०अन्तः— इति पूज्यश्रीचक्रेश्वरसूरिप्रारब्धायां तत्प्रशिष्यश्रीतिलकाचार्यनिर्वाहितायां सम्यक्त्ववृत्तौ समर्थित पञ्चमं तत्त्वतत्त्वम् ॥
तत्समाप्तौ च समाप्ता सम्यक्त्वप्रकरणवृत्तिरिति ॥श्रीः ॥

तीर्थे वीरविभोः सुधर्मगणभृत्संतानलब्धोन्नति-
श्चारित्रोज्ज्वलचन्द्रगच्छजलधिप्रोल्लासशीतद्युतिः ।
सम्यक्त्वाभिधशास्त्रसूत्रनगरीसंसूत्रणासूत्रभृत्
श्रीचन्द्रप्रभसूरिरद्भुतमतिर्वादीभसिंहोभवत् ॥१॥

तत्पट्टलक्ष्मीश्रवणावतंसाः श्रीधर्मघोषप्रभवो बभूवुः ।
यत्पादपद्मे कलहंसलीला दधौ नृपः श्रीजयसिंहदेवः ॥२॥
तत्पट्टोदयशैलशृङ्गमभजत् तेजस्विचूडामणिः
श्रीचक्रेश्वरसूरिरित्यभिधया देवस्त्विषामीश्वरः ।
यः सम्यक्त्वसरोजकोरकममुं नेतु विकासश्रियं
व्याख्या[ता]पि विनेयषट्पदमुदे व्यापारयामासिवान् ॥३॥

प्राप्ताचार्यपदैश्वर्याः षड्विनेयाः स्वदीक्षिताः ।
भूषयन्ति स्म तत्पट्टं साम्राज्यमिव षड्गुणाः ॥४॥
तेष्वादिमः सुमतिसिंहगुरुर्बभूव दिक्कूलमुद्वहयशस्तटिनीगिरीन्द्रः ।
विद्यावधूवदनकैरवपूर्णचन्द्रश्चन्द्रोज्ज्वलस्वगुरुगच्छधरावराहः ॥५॥

श्रीबुद्धिसागरगुरुः प्रथितो द्वितीयः श्रीमांस्तृतीयगणभृत्त्रिदशप्रभाख्यः ।
श्रीतीर्थसिंह इति सूरिवरश्चतुर्थः प्रज्ञातिरेककुलिशक्षतवादिशैलः ॥६॥

श्रीमान् शिवप्रभः सूरिः समजायत पञ्चमः ।
परं कुतूहलमिदं यन्म रागाधिभूरभूत् ॥७॥
कीर्त्तिप्रभाभिधानश्च षष्ठोभूद् गणभृद्वरः ।
निःशेषं वाङ्मयं व्याप यस्य सूक्ष्मापि शेमुषी ॥७॥

श्रीशिवप्रभसूरीणां शिष्यलेशोस्मि मन्दधीः ।
नाम्ना श्रीतिलकाचार्यः श्रुताराधनगृद्धिभाक् ॥९॥

सोहं वृत्तिं प्रगुरु० ।

इति श्रीसम्यक्त्वरत्नमहोदधिः संपूर्णः ॥

संवत् १५०४ वर्षे आसो सुदि १० सोमवारे साधुपूर्णिमागच्छे चन्द्रप्रभसूरिसंताने भ०श्रीपुण्यचन्द्रसूरि–शिष्यगणिवरजयसिंहगणिना राणपुरनगरे सम्यक्त्वरत्नमहोदधिग्रन्थपुस्तकं लिखितम् ॥

संम(व)त १५५७ मोती माहा सुदी ९ ग्रन्थाग्रन्थम्-९००० ॥श्री॥

[2935] वृ॰ आदि:—चञ्चच्चन्द्रमरीचिचारुरुचिरा विश्वंभरा राजते
कीर्त्तिर्विष्टपचन्द्रशेखरशशी(शि)शीतांशुशीतत्विषम् ।
यः शुद्धाशयशुद्धबुद्धिविभवो धीरो धिनोत्युद्भवं
वीरं नौमि नमत्सुरासुरशिरो घृष्टांह्रिविश्वाग्रणीः ॥१॥

येषामास्यारविन्दागमसुपरिमलास्वादशिष्यालिमाला
मत्ता मूकापि धत्ते मधुरमुखरतामेवमंह्रिप्रसादः ।
चञ्चत्स्वर्गापवर्गप्रभवसुसुखदो देहिनां भानवो ये
भासन्ते चारुगोभिस्त्रिभुवनमखिलं लीलया कामदाभिः ॥२॥

तेषां परमगुरूणां नत्वा पदपंकजं स्फुटां वक्ष्ये ।
वृत्ति दर्शननाम्नः शास्त्रस्य हितां सुखबोधाम् ॥३॥

सुगृहीतनामधेयो भगवान् श्रीचंद्रप्रभसूरिर्दर्शनशुद्धिनामकं शास्त्रं चिकीर्षुर्मंगलसंबन्धाभिधेयप्रयोजनप्रतिपादनप्रतिबद्धमादावेदं गाथाद्वयमाह—पत्तभवं॰ ।

वृ॰ अन्तः— संप्रति पुनरपि शास्त्रगतोपदेशमाह—
एवं दंसणसोहिं सव्वे भव्वा पढंतु निसुणंतु ।
जाणंतु कुणतु [ल]हंतु सिवसुहं सासयं झत्ति ।

अस्या व्याख्या—एतां दर्शनशुद्धिं सर्वेपि भव्याः पठन्तु सूत्रतो निश्रृण्वन्तु अर्थतः जानन्तु पुनः पुनरभ्यासतः ।

यः कन्दर्पतरोः कुठारललितो लीलाजितेभ्यः प्रभु-
र्यस्याशेषसुरासुरेन्द्रशिरसा पादद्वयं घृष्यते ।
हेलान्दोलितमन्दि(न्द)रो जिनपतिः श्रीवर्द्धमानोनघ-
स्तीर्थस्यास्य विभुर्जगन्नयनतो जीयाज्जगद्भास्करः ॥१॥

स्यात् तस्याथ भवाटवीसुगहने नानाकुतीर्थिव्रजो-
त्सर्पत्श्वापदभीतिके कटुरटन्मेहोग्रघूकाकुले(?) ।
नानाजीवमहीतले तव गणोत्सर्प्पत्कुजीवाकरे
व्याघ्रादि[षु] महातिदुःखगहना नोल्लासितापोषिकम् ॥२॥

शीलोत्तुंगविशालपालिकलितं सच्छ्रावक-श्राविका-
नानावृक्षवृतं समस्तसुतपःस्वाध्यायनीराकरम् ।
नानालब्धिरथांगपक्षिनिवहोल्लासिप्रकोलाहलं
प्राणित्राणदतीर्थचारुसुसरस्तत्त्वोप्रसद्दर्पणम् ॥३॥

तस्मिन्नुग्रविशालशीलकलितस्वाध्यायध्यामोद्यतो-
त्सर्प्प[च्]चारुतपःसुसंयमयुतः श्रेय[ः]सु[सा]ध्वालयः ।
सल्लीलांगदल[त्]कलंकविकलो ज्ञानादिगन्धोद्धुरः
सेव्यादेव नृपे द्विरेफसुततेः श्रीचन्द्रगच्छेऽम्बुजः ॥४॥

तस्मिंस्तीर्थविभूषकेभवदथ श्रीसर्वदेवः प्रभुः
सूरिः शीलनिधिर्धियार्जितमरुत्सूरिः सतामग्रणीः ।
तस्याप्युद्गतचारुचग्नदमल्लोत्सर्पद्गुणौघास्पदं
स्याच्छिष्यो जयसिंहसूरिरमलस्तस्यापि भूभूषणम् ॥५॥

हेलानिर्जितवादिवृन्दकलिकालाशेषलुप्तव्रता-
चारोत्सर्प्पितसत्पथैककदिनः सिंहः कुमार्गद्विपे ।
चञ्चच्चञ्चलचित्तवृत्तिकरणग्रामाश्च घातो बभूः (?)
श्रीचन्द्रप्रभसूरिचारुचरितश्चारित्रिणामग्रणीः ॥६॥

ज्ञानादित्रयरत्नरोहणगिरि[ः] सच्छीलपाथोनिधि-
र्धीरो धीधनसाधुसंहतिपतिः श्रीधर्मवृन्दारकः ।
स्यात् सिद्धांतहिरण्यघर्षणकृते पट्टः पटुः शुद्धधीः
शिष्यो गच्छपतिः प्रतापतरणिः श्रीधर्म्मघोषप्रभुः ॥७॥

तच्छिष्यविमलगणिना कृतिना श्राद्धानुजेन शास्त्रस्य ।
अस्योच्चैर्वृत्तिरियं विहिता साहाय्यतः सुधियाम् ॥८॥

निजशिष्यविजयसेनाभिधगणिविहिताद्विधाय भव्यासु(शु) ।
करुणामतिगीतार्था विशोध्य विस्तारयन्त्वेनाम् ॥९॥

श्रीवटपद्रकपत्तनविहितावासेन चतुरशीत्यधिकैः ।
एकादशैः शतैर्गत(ताद्) विक्र[म]कालात् तथा चैत्रे ॥१०॥

वदिपक्षचतुर्दश्यां विहितेयं वृत्तिरमलबोधा ।
यस्याः स्तुत्यार्जितपुण्यं भव्यासुमतां ममापीह ॥११॥

या विश्वाशेषवस्तुप्रकटनकरणे भातु तुल्या सुपुंसां
यस्याः संपर्कमात्राद् सुखममलं लीलयासादयन्ति ।
यामाराध्यातिमूर्खा अपि जननिवहाः पण्डिता विश्ववन्द्या
जायन्ते तां नमामि त्रिभुवनविनुतां भारतीं भावतोहम् ॥१२॥

यस्याः प्राप्य प्रसादं जडमतिविभवेनासुवृत्तिः प्रशस्ये-
दक्षा विद्वज्जनानाममलसुमनसां मोददा विस्तृतेः ।
नानाविद्याप्रपञ्चप्रगुणगुरुणाशेषलब्धे प्रकाशे
जीयाज्जैनैः शशाङ्कः प्रथमरुहकृते भारतीबीजकल्पाः(?) ॥१३॥

यावत् पाथोधयोयं सुरगिरिरखिलालोकलोकोदरस्थो
यावद् द्वीपोथ जम्बूस्त्रिभुवनतिलकः पूर्णचन्द्राकृतिश्च ।
यावज्जैनोऽत्र धर्म्मः प्रभवति शशी भूतलं तावदेवा
भव्याः शृणवन्तु श्रव्यां विषयविमुखतापादिकां बोधिकां च ॥१३॥

संवत् १५५९ वर्षे फाल्गुणे मासे ती(ति)थौ वदी १२ मगल-
वार लिपीकृतं मया कीसनकरण-पुत्ररीद्धीकरणका नागोरमा रहीश ॥

[ 2936 ] **मू०आदिः**— सच्चामीकरबन्धुरोद्धुरतरस्कन्धस्फुरद्दोर्लतः
प्रोद्यत्कुन्तलकान्तकान्तिलहरीस्वच्छाश्मगर्भच्छदः ।
दन्तोद्द्योतसुजातमौक्तिकसुमः स्वेच्छानुरूपं फलन्
कल्पद्रुर्वृषभप्रभुर्विजयते व्याख्यासु साक्षादिव ॥१॥

उर्व्यामुर्व्यस्ति भीतिर्मम मृगपतितस्तन्निमाकाशदुर्गे
चन्द्रं सेवे न तत्रापि हि भयमधिकं सिंहिकेयग्रहान्मे ।
इत्थं ध्यात्वा मृगो यत्क्रमकमलयुगं स्वान्यरक्षातिदक्षं
कक्षीचक्रेऽङ्कदम्भात् स भवतु भविनां शान्तये शान्तिनाथः ॥२॥

यावाकर्णनमात्रतोप्यरतिदौ वर्गान्तसंस्थौ न-मौ
वर्णौ वीक्ष्य कृपावशादतितरां तद्गौरवाय क्रमात् ।
कृत्वा यौ स्वरसंयुतौ विनिहितौ स्वीयेभिधानेऽनघे
स श्रीनेमिजिनेश्वरो भवभृतां देयादमन्दां मुदम् ॥३॥

सिद्धान्तोर्जितशालिनो नयचयप्रोजस्विगर्जाजुष-
श्छन्दो-व्याकरण-प्रमाणसुमहःसौदामिनीमालिनः ।
चिन्वन्तो निखिलं धरित्रिवलयं व्याख्यामृतोद्वर्षणैः
श्रीमन्तो गुणशेखराख्यगुरवो नन्दन्तु मेघा इव ॥७॥

ढिल्ल्यां साहिमहम्मदं शककुलक्ष्मापालचूडामणिं
येन ज्ञानकलाकलापमुदितं निर्म्माय षड्दर्शिनी ।
प्राकाश्यं गमिता निजेन यशसा साकं स सर्व्वागम-
ग्रन्थज्ञो जयताज्जिनप्रभगुरुर्विद्यागुरुर्नः सदा ॥८॥

एतेषां गुणशालिनां पदपयोजन्मद्वयी सेवनात्
संजाताधिगमः स संघतिलकाचार्यो जडोप्यंजसा ।
पूर्वाचार्यकृतेर्विचारचतुरज्ञातार्थसार्थोद्गतेः
सम्यक्त्वाग्रमसप्ततेर्विवरणं कर्त्तास्मि संक्षेपतः ॥९॥

**वृ० अन्तः—** अत्र शिवशब्दोपादानं सूत्रयता सूत्रकृता शास्त्रप्रांते मंगलमुक्ता कृता, यतो मंगलादीनि मंगलमध्यानि मंगलावसानानि शास्त्राणि विदुषामुपादेयानि निःश्रेयसः साधकानि च भवन्तीति गाथार्थः ॥

या श्रीजिनेन्द्रसमयाम्बुधितो गृहीत्वा
सम्यक्त्वतत्त्वमणिसप्ततिका व्यधायि ।
पूर्वैर्मुनीश्वरवरैरधुना मया तु
सोत्तेजिता विवृतिशाणकयन्त्रयोगात् ॥१॥
जैनं वाक्यमनन्तार्थं शेमुषी त्वतिदुर्बला ।
अत उक्तं यदुत्सूत्रं तन्मिथ्या दुष्कृतं मम ॥२॥

इति श्रीरुद्रपल्लीयगच्छगगनमण्डनदिनकरश्रीगुणशेखरसूरि-पट्टावतंसश्री-संघतिलकसूरिविरचितायां सम्यक्त्वसप्ततिकावृत्तौ तत्त्वकौमुदीनाम्न्यां सम्यक्त्व-स्थानषट्कस्वरूपनिरूपणो नाम द्वादशमोऽधिकारः समाप्त. । ग्रन्थाग्रम् ५३६, अ० २५ । समाप्ता चेयं सम्यक्त्वसप्ततिकावृत्तिस्तत्त्वकौमुद्यभिधाना ।

अथ प्रशस्तिः—

श्रीवीरशासनमहोदधितः प्रसूतः
प्रोद्यत्कलाभिरभितः प्रथितः पृथिव्याम् ।
माद्यन्महःप्रसरनाशिततामसोऽस्ति
श्रीचान्द्रगच्छ इति चन्द्र इवाद्भुतश्रीः ॥१॥

तत्रासीद् धरणेन्द्रवन्द्यचरणः श्रीवर्द्धमानो गुरु-
स्तत्पट्टे च जिनेश्वरः सुविहितश्रेणीशिरःशेखरः ।
तच्छिष्योऽभयदेवसूरिरभवद् रङ्गनवाङ्गीमहा-
वृत्ति-स्तम्भनपार्श्वनाथजिनराड्मूर्तिप्रकाशैककृत् ॥२॥

तत्पट्टपूर्वाचलचूलिकायां भास्वानिव श्रीजिनवल्लभाख्यः ।
सत्त्वचक्रसंबोधनसावधानबुद्धिः प्रसिद्धो गुरुमुख्य आसीत् ॥३॥

तच्छिष्यो जिनशेखरो गणधरो जज्ञेतिविज्ञाग्रणी-
स्तत्पादांबुजराजहंससदृशः श्रीपद्मचन्द्रप्रभुः ।
तत्पट्टाम्बुधिवर्द्धनः कुवलयप्रोद्यत्प्रशेधैकधीः
श्रीमान् श्रीविजयेन्दुरिन्दुवदभूच्छश्वत्कलालंकृतः ॥४॥

पट्टे तदीयेऽभयदेवसूरिरासीद् द्वितीयोपि गुणाद्वितीयः ।
जातो यतोयं जयतीह रुद्रपल्लीयगच्छः सुतरामतुच्छः ॥५॥

तत्पादाम्भोजभृङ्गोजनि जिनसमयोम्भोधिपाथोधिजन्मा
सूरीन्द्रो देवभद्रोनुपशमरमारामघोपमानः ।
तस्यान्तेवासिमुख्यः कुमतमतितमश्चण्डमार्तंडकल्पः
कल्पद्रुः कल्पितार्थप्रवितरणविधौ श्रीप्रभानन्दसूरिः ॥६॥

ज्योतिस्तोमैरमानैः प्रतिहतजगतीवर्तितेजस्वितेजः-
स्फूर्त्तौ तत्पट्टपूर्वाचलविमललसन्मौलिमौलीयमानौ ।
श्रीमान् श्रीचन्द्रसूरि-विमलशशिगुरुश्चाप्रमेयप्रभावौ
जातौ श्रीराजहंसाविव भविकजनव्यूहबोधैकदक्षौ ॥७॥

आकाश्मीरमरीणचारुधिषणान् वादीन्द्रवृन्दारकान्
मायद्वादविधौ विजित्य जगति प्राप्तप्रतिष्ठोदयाः ।
सूरीन्द्रा गुणशेखराः स्मयहराः शृङ्गारचन्द्रक्षमा-
नाथाभ्यर्च्यपदाम्बुजाः समभवंस्तत्पट्टशृङ्गारिणः ॥८॥

श्रीसंघतिलकाचार्यास्तत्पदाम्भोजरेणवः ।
सम्यक्त्वसप्ततेर्वृत्तिं विदधुस्तत्त्वकौमुदीम् ॥९॥

अस्मच्छिष्यवरस्य सोमतिलकाचार्यानुजस्याधुना
श्रीदेवेंद्रमुनीश्वरस्य वचसा सम्यक्त्वसत्सप्ततेः ।
श्रीमद्विक्रमवत्सरे द्विनयनांभोधिक्षपाकृत्(१४२२)प्रमे
श्रीसारस्वतपत्तने विरचिता दीपोत्सवे कुर्वता ॥१०॥

सा सोमकलशवाचकवरानुजैरत्र विहितसाहाय्यैः ।
प्रथमादर्शे लिखितोपाध्यायश्रीयशःकलशैः ॥११॥

मेधामान्द्यात् प्रमादाच्च यदवद्यमिहाजनि ।
तत् प्रसद्य महाविद्याः शोधयन्तु विशारदाः ॥१२॥

द्वादशात्मैव सद्वार्गैर्द्वादशात्मेव बोधकृत् ।
इयं सम्यक्त्वतत्त्वानां कौमुदी द्योततां भुवि ॥१३॥

प्रशस्तिश्लोक २५ अ०२२ । अथ सकलं ग्रन्थमानम्-

प्रत्यक्षरं निरूप्यास्या ग्रन्थमानं विनिर्मितम् ।
रुद्राद्रिमुनि(७७११)संख्याका[ः]श्लोकाः सचतुरक्षराः ॥१॥

अनेन श्लोकेन सह ग्रन्थमानम् ७७११ अक्षर ४॥

अथ संवत्सरेऽस्मिन् श्रीविक्रमादित्यराज्ये १४८९ वर्षे पौषसुदि ३॥

[2940] मू० अन्तः— इति दर्शनसप्ततिका समाप्ता । लिखिता श्रीसोमजयसूरिशिष्येण श्रीपत्तन-नगरे ॥

अव० अन्तः—इति सम्यक्त्वसप्ततिकावचूरिः ॥ पत्तननगरे लिखिता ॥
पं० आनन्दसहजगणिलिखिता ॥श्री॥

[2941] अन्तः— शशि-रस-मुनि-रसवर्षे(१६७६) पौषे शुक्ले त्रयोदशीदिवसे ।
सुरतिबंदिरमुख्ये परमार्हतसंघरमणीये ॥१४॥

इति रत्नचन्द्रनामा चकार बालावबोधमतिसुगमम् ।
सम्यक्त्वसप्ततिवरप्रकरणतत्त्वार्थबोधकरम् ॥१५॥

सूर्याचन्द्रमसौ यावत् यावत् सप्त धराधराः ।
यावत् तपागणस्तावदयं जयतु पुस्तकः ॥१६॥

इति श्रीसम्यक्त्वसप्ततिकाबालावबोधः संपूर्णः ॥

संवत् १८१८ वर्षे कार्त्तिकशुदि पंचमीदिने चन्द्रवारे पूर्वाषाढनक्षत्रे भ०श्रीविजयलक्ष्मीसूरीश्वरविजयमानराज्ये भट्टारकश्रेष्ठ भ० श्रीसौभाग्यसूरीश्वर–शिष्य पं० जीवविजयकस्यार्थे सम्यक्त्वसप्ततिकाभिधानं लिखितमिदं पुस्तकं पं० श्रीयशविजयगणि–तत्शिष्य पं० श्रीमोहनविजय[ः] श्रीस्तम्भतीर्थ(र्थे) लिखितः ॥

[2942] अन्तः— इति श्रीसम्यक्त्वप्रकरणस्य सम्यक्त्वरत्नप्रकाशबालावबोधबीजकं उपाध्यायश्री-रत्नचन्द्रगणिभिः कृतं संपूर्णमस्तु ।

संवत् १७८८ सत्तरअठ्ठासीआना वरषे वइशाख मासइ शुक्लपक्षइ ३-तृतीयदिने रवेउ वारे लषितं श्रीपाटणमध्ये संघवी फतेचन्द सूरसंघः श्री-कल्याणमस्तु ॥

[2943] बा० आदिः—नत्वा श्रीपार्श्वमर्हन्तं स्मृत्वा च श्रुतदेवताम् ।
श्रीमत्सम्यक्त्वसप्तत्याः कुर्वे बालावबोधनम् ॥१॥

बा० अन्तः— इति श्रीतपागच्छालंकारसारभट्टारकश्रीहीरविजयसूरीश्वरपट्टालंकारहारसार-भट्टारक श्री ५ विजयसेनसूरीश्वर–पट्टप्रभाकरभट्टारकश्री ५ श्रीविजयदेवसूरीश्वर-विजयमानराज्ये महोपाध्यायश्रीसकलचन्द्रगणि-शिष्योपाध्यायश्रीशान्तिचन्द्रगणि–शिष्यउपाध्यायश्रीरत्नचन्द्रगणिभिः श्रीसम्यक्त्वरत्नाधिष्ठान-श्रीसूरतिबंदिरादिचतुर-संघस्य चतुर्दश्यष्टम्यादिपर्वसु अप्रमत्ततया पौषधप्रतिपालनार्थं वाचनार्थं विरचिते श्रीसम्यक्त्वरत्नप्रकाशनाम्नि श्रीसम्यक्त्वसप्ततिकाप्रकरणबालावबोधसम्यक्त्व-स्थानपट्कस्वरूपनिरूपणो नाम द्वादशोधिकारः समाप्तः ।

तत्समाप्तौ श्रीसम्यक्त्वसप्ततिकाप्रकरणस्य सम्यक्त्वरत्नप्रकाशनामा बालाव-बोधः समाप्तः ॥

अथ प्रशस्तिर्लिख्यते—

श्रीवीरपट्टांबुजभास्कराभः श्रीमत्सुधर्मा गणभृद् बभूव ।
अद्यापि वाणी प्रसरीसरीति यस्य प्रभोः पंडितचक्रवाचा ॥१॥

बभूव तत्पट्टपरंपरायां सूरिर्जगच्चन्द्र इति प्रसिद्धः ।
लेभे तपागच्छ इति प्रसिद्धिं यस्माद् गणोयं प्रथितावदातः ॥२॥

परम्परायामपि तस्य जातः साधुक्रियामार्गविकाशभास्वान् ।
आनन्दपूर्वो विमलाप्रसूरिर्जगज्जनानन्दकरः प्रतीतः ॥३॥

तस्यापि पट्टे विजयाप्रदानः सूरिर्बभूव प्रबलप्रतापः ।
राशिं गुणानां किल यस्य वारांराशेः समानीकुरुते कवीन्द्रः ॥४॥

बभूव सूरिः किल तस्य पट्टे श्रीहीरपूर्वो विजयोर्जितश्रीः ।
क्षेमे प्रतिष्ठां किल भूयसीं यो नरेन्द्रलक्ष्मी(देवे,न्द्रकृतामजस्रम् ॥५॥

तस्यापि पट्टेजनि सूरिराजः सेनोत्तरश्रीविजयो यशस्वी ।
ततार जैनागमवारिराशिं नावा स्वबुद्धयोत्तमभाग्यभाग्यः ॥६॥

विजयते किल तत्पदसेवया सुलभसूरिपदः प्रणयी गुरौ ।
विजयदेवगुरुर्गरिमाम्बुधिस्तपगणे गगने किमु चन्द्रमाः ॥७॥

श्रीआनन्दविमलगुरुशिष्याः श्रीसहजकुशलनामानः ।
लुम्पाकमतमपास्याङ्गजमलमिव निर्मला जाताः ॥८॥

तेषां च शिष्यमुख्या वाचकवरसकलचन्द्रनामानः ।
चन्द्रा इव वचनसुधां ववृषुर्ये विबुधवरपेयाम् ॥९॥

श्रीशान्तिचन्द्रा वरवाचकेन्द्रास्तेषां च शिष्या बहुशिष्यमुख्याः ।
बभूवुरुद्दामगुणैरुपेताः प्रभावकाः श्रीजिनशासनस्य ॥१०॥

श्रीमज्जम्बूद्वीपप्रज्ञप्तेर्वृत्तिविरचनाचतुराः ।
येषां बुद्धिं सुरगुरुरपीहते विश्वगेयशुभयशसाम् ॥११॥

—गीतार्या ॥

तेषां गुरूणां गुणसागराणां प्रसादलेशं समवाप्य चक्रे ।
अनेकशास्त्रार्थविचारसारः परोपकृद् वाचकरत्नचन्द्रः ॥१२॥

सम्यक्त्वसप्तत्यमलप्रबोधं बालावबोधं पटुधीसुबोधम् ।
सम्यक्त्वरत्नप्रकरप्रकाशनामानमेनं समयानुसारात् ॥१३॥ युग्मम् ॥

रस-मुनि-रस-शशि(१६७६)वर्षे पौषशुक्ले त्रयोदशीदिवसे ।
वर्षे पौषशुक्ले १३ सूरतिबंदिरमुख्ये परमार्हतसंघरमणीये ॥१४॥

इति रत्नचन्द्रनामा चकार बालावबोधमतिसुगमम् ।
सम्यक्त्वसप्ततिवरप्रकरणतत्त्वार्थबोधकरम् ॥१५॥

सूर्याचन्द्रमसौ यावत् यावत् सप्त धराधराः ।
यावत् तपागणस्तावदयं जयतु पुस्तकः ॥१६॥

इति श्रीसम्यक्त्वसप्ततिकाप्रकरणबालावबोधः संपूर्णः । सा० अमरसी-पठनार्थम् ॥श्रेयोस्तु ॥

[2949] (अन्यदीयहस्तेनोल्लिखितः)—

अन्तः— संविग्नसाधुमणिमंडितश्रीमाणिक्यसागरगणिप्रवरस्य शिष्यः ।
श्रीवीरसागरगणिप्रवरस्तदर्थं धर्मक्रियोपनिषदद्भुतमस्तु शास्त्रम् ॥१॥

श्रीविक्रमाद् गज-रस-क्षितिपाङ्कितेब्दे(१६६८)
जीवे तृतीयतिथिगे सहमासि शुक्ले ।
पक्षेऽलिखद् द्विजजलेखक उद्धवाख्यः
पुस्तं चिरं जयति सत्सुकृतोपयोगि ॥२॥

[2950] आदिः— भत्तिभरनमिरसुरनरसिरिसेहरयणकिरणससिरियं ।
नमिउं सिरिवीरपयं वुच्छं सुयहीलणुप्पत्ति ॥१॥

अन्तः— इय सुयहीलुप्पायणफल जणा जाणिऊण अन्नेवि ।
जसभद्दे जिणवयणे दढचित्ता होह पइदियहं ॥९॥

इय सुयहोलुप्पत्तीअज्झयणं सम्मत्तं ॥

संवत् १५८१ संवत्सरप्रवर्त्तमाने उत्तरायणे ग्रीष्मऋतौ आषाढशुदि-१४ भौमे लिषापितम् । श्रीअणहिल्लपुरपत्तने लिषापितम् ॥

[2953] अन्तः— इति श्रीज्ञानार्णवे योगप्रदीपाधिकारे आचार्यश्रीशुभचन्द्रविरचिते मोक्षप्रकरण समाप्तम् ॥

ज्ञानार्णवस्य माहात्म्यं चित्रं को वेत्ति तत्त्वतः ।
यद् ज्ञानात् तीर्यते भव्यैर्दुस्तरोपि भवार्णवः ॥

ग्रंथाग्र श्लोकसंख्या २७८० । यादृशं० ।

सं० १४८५ वर्षे० कार्त्तिकसुदि ११ सोमदिने निजप्रतापप्रभावपराकृततरुणतरणिमंडलान् नयविनयविवेकसौराज्यरञ्जितावण्डलानां महा[राजा]धिराजश्रीमोकलदेवराज्यप्रवर्त्तमानानां त्रिदिवपतिपत्तनसमृद्धिस्पर्द्धिश्रीकान् श्रीमति देवकुलवा(पा)टके श्रीनेमिनाथचैत्यालये श्रीमूलसंघे सरस्वतीगच्छे बलात्कारगणे नन्दिसंघे श्रीकुन्दकुन्दाचार्यान्वये अनेकपट्टावलीविराजमाने श्रीशुभकीर्त्तिदेवपट्टान्वये धवलयशश्रवलमहाधवलामहासिद्धान्तसुकण्ठीकृतरायराजगुरुपोषितजिनमतश्रीधर्मचन्द्रदेवाः तत्पट्टे उपशमसेतुचाल्यमाणेन समवसरणेन सह विराजमानान् भट्टारकश्रीरत्नकीर्त्तिदेवाः तत्पट्टे संस्थितवान् महाराजाधिराजसुरत्राण–महम्मदसाहि-अनुरञ्जितचित्तान् तत्पट्टराजावलीसंस्थित-सुरत्राणपेरोजसाहि–अनुरञ्जितचित्तान् अनेकम्लेच्छसंस्तुतचरणकमलान् षट्तर्कचक्रवर्त्तिनिर्जितपरमतपाषण्डिनां कृतगर्वापहारान् भट्टारकश्रीप्रभाचन्द्रदेवान् तत्पट्टे संस्थितवान् अष्टव्याकरणोयरहस्यरञ्जितविद्वज्जनचित्तान् भट्टारकपद्मनंदिदेवान् तच्छिष्यपाण्डित्यकमलाकमलिनीकमलबन्धून् निश्चयरत्नत्रयतन्निष्ठान् मुनिश्रीदेवेंद्रकीर्त्तिदेवान् तद्दीक्षिततपोधनउत्तमक्षमादिदशलक्षणो धर्मोद्धरप्रकटनसमर्थान् मुनिश्री-

विद्यानन्दिदेवोपदेशात् हुंबडान्वयः अनुव्रतादिद्वादशव्रतभारभरणोपेतः निर्म्मल-श्रीजिनेन्द्रचरणसरोजराजीराजहंसान् वात्सल्यदशविधवैयावृत्यकरणैकतत्परान् सा जैना-तज्जाया सम्यक्त्वगुणगणशालिनी साल्ह तयोः पुत्र सकलशास्त्रविशारदान् निअसौजन्य( ? न्ये )न श्री( ? स्त्री)कृतशत्रुमित्रान् दानेकमहीतले कल्पवृक्षान् परोपकारकरणपरायणान् अखिलमहीतले प्रसिद्धान् साहुभोजा-भार्याधसू तयोः पुत्र धरणउ भोजाभ्राता दु(द्वि)तीय जिनचरणाराधनतद्गतचित्तान् देवपूजादि-षट्कर्म्मनिरतान् साहुगोसल-भार्याकरमी एतेषां मध्ये साधु जेजा ज्ञाना-वरणीयकर्म्मक्षयार्थे ज्ञानार्णवग्रन्थ लिखापि(लिखाप्य) दत्तं मुनिश्रीविद्यानंदी(दि) देवयोग्यम् ।

ज्ञानवा[ न् ] ज्ञानदानेन निर्भयो जयदानतः ।
अन्नदानात् सुखी नित्यं निर्व्याधिः भेषजो भवेत् ॥१॥

अपरस्मिन भवे जीवो बिभर्त्ति सकल श्रुतम् ।
मोक्षसौख्यमवाप्नोति शास्त्रादानफला[ न् ] नरः ॥२॥

लिखित्वा लेखयित्वा यः साधुभ्यो दीयते श्रुतम् ।
व्याख्यायतेथवा तेन शास्त्रदानं तदुच्यते ॥३॥

वर्द्धतां जिनशासनम् ॥

सं० १४८५ वर्षे० कार्त्तिक सुदि ११ सोमवासरे रुद्रपल्लीयगच्छे वाचनाचार्यश्रीनरचन्द्रशिष्य धोमा लि(खि)तम् । मुनिविद्यानन्दलिखितं पठनार्थम् । आचन्द्रार्कं चिरं नन्द्यात् । श्रीदेवगुरुप्रसादात् ।

(एतदनन्तरं प्रभ्रष्टायां पङ्क्तावपि एतान्यक्षराणि पठयन्ते)—

आ०श्रीगुणचन्द । श्रीपालस्येदं पुस्तकं पं०नयाख्येन दत्तम् ॥ ब्र० सामलपठनार्थम् ॥

[2954] अन्तः— इति ज्ञानार्णवे योगप्रदीपाधिकारे आचार्यश्रीशुभचन्द्रविरचिते मोक्ष-प्रकरणं संपूर्णम् । इति श्रीशुभचन्द्रविरचितं ज्ञानार्णवग्रन्थः संपूर्णः ॥

सून्य बहू वसु हंसधर(१८१०)अस्विन वदि रविवार ।
तिथ एकादशी जानिये लिख्यो ग्रन्थ सुभ सार ॥१॥

अंबहटानगर सुभ थानिमें ज्ञानार्णव यह सार ।
लिख्यो चित्तको उमगसों जाको अत विस्तार ॥२॥

सोरठाः— पढत सुनत सुख उपजै पावत पदनिर्वान ।
अर्थसहित याको पढे उपजे अद्भुत ज्ञान ॥३॥

अडिल्लः— आचारज वधमान सुगुन अतिही भयौ ।
ताको शिष्य महासिंघ आचारजपद धर्यो ॥

ताको शिष्य जैगुपाल सुपदधारी भए ।
ता शिष्य मूला नामदास पद सो लए ॥४॥

[2956] आदिः— ॐ नमो वीतरागाय ॥

करणक्रमनिःक्रान्तं कर्तृ-कर्म्मादिवर्ज्जितम् ।
ध्यातृ-ध्येयपथातीतं प्रत्यग्ज्योतिरुपास्महे ॥१॥

अन्तः— इति ध्यानसारः समाप्तमिति ॥

[2960] आदिः— ॐ नमो वीतरागाय ।

सयोगचिन्तामणितोमणोयो येनाधिजग्मे जगतः पतित्वम् ।
स योगिवृन्दारकवन्दनीयोबताद्दवयानि घनं जिनो नः ॥१॥

सुधाविन्दोरिवानन्दममन्दमुपबिभ्रतः ।
योगबिन्दोः समासेन वृत्तिरेषा विधीयते ॥२॥

गुरूपदेशो न च तादृगस्ति मतिर्नैवा काचिदुदाररूपा ।
तथापि योगप्रियतावशेन यत्नस्तदाभ्यासकृते ममायम् ॥३॥

तस्य चेदमादिसूत्रं–नत्वेत्यादि श्लोकद्वयं॰

अन्तः— समाप्ता चेयं योबिन्दुप्रकरणवृत्तिः ॥ ग्रंथाग्रथम् ३५००॥ संवत् १९४४ रा फाल्गुनशुदि १५ शुभदिने लिषितम् ॥४॥

[2972] अन्तः— इति परमार्हतश्रीकुमारपालभूपालशुश्रूषिते आचार्यश्रीहेमचन्द्रविरचिते अध्यात्मोपनिषन्नाम्नि संजातपट्टबन्धे श्रीयोगशास्त्रे द्वादशप्रकाशे चतुर्थप्रकाशस्य विवरणं समाप्तमिति ।

अष्टव्याकरणेषु तत्त्वमखिलं व्याचक्षते ये क्षणात्
षट्तर्कैः परितर्कयन्ति विदिता[न्] निःशेषवादिव्रजान् ।
छन्दोलंकृतसारशास्त्रनिपुणाः प्राप्तप्रतिष्ठा[ः] क्ष(क्षि)तौ
श्रीपद्मप्रभसूरयः सुगुरवोऽभूवन् भुवो [भू]षणम् ॥१॥

तेषां पदट(?ट्टे) महातेजा[ः] प्रभासनविभाकरः ।
अमरप्रभसूरीन्द्रो विजय(?यी) विनयी नयी ॥२॥

तेन श्रीयोगशास्त्रस्य वृत्तितो हृद्यगद्यकम् ।
पाहंर(?) नवैश्चारुगद्यैर्विवरणं लघुम् ॥३॥

प्रदाय वाचनाचार्यदेवसुन्दरकारिणे ।
तदिदं शास्त्रं दोषज्ञैः सो(?शो)ध्यतां मुन(?नि)पुंगवैः ॥४॥

संवत् अठारासय सताईे(१८२७) मार्ग्गशिरमासे कृष्णपक्षे तिथौ द्वितीयायां सोमवासरे लिष(खि)तं स्वस्तिश्रीश्रीपूज्यसदारंगपट्टे तच्छिष्यर्सिघराज-त(त्)पट्टे

तच्छिष्यजेठमल्ल-तत्शिष्यमनोहरदासजी-तत्शिष्यसुन्दरदासजीतत्शिष्यसदान-न्दजी-तच्छिष्यजसवन्तजी – तत्शिष्यवर्द्धमानजी-तत्शिष्यमहासिंघजी-तत्शिष्य-श्रीपूज्यआचार्यजयगोपालस्वामिजी-तत्शिष्यपगरजपगधुर( ऋ )षि(श्री)पूज्यमूला-ऋषजी ।

दुहाः— श्रीपूज्यके शिष्यनै पुस्तक लिषी प्रधान ।
पढत सुणत गुण उपजै थानेसरनगर सुथान ॥

लेषि(ख)कपठनार्थं आत्मार्थं शुभं भवतु लेषक-पाठकयोमि(रि)ति । मंगलं भवति कल्ला(ल्या)णं भवति ॥

[2975] बा० आदिः— श्रीवीतरागाय नमः ॥

सिद्धार्थक्षितिपालसुनुममलध्यानेन रम्यं परं
सर्वज्ञं सुरसिद्धसेवितपदद्वन्द्वं सुसिद्धिप्रदम् ।
वन्दे ध्येयसमेकममलं सद्व्यापकं सर्वगं ।
संसारार्णवपारगं भयहरं श्रीवर्द्धमानं जिनम् ॥१॥

श्रीमत्खरतरगच्छे धरणीतलशुभे पवित्रतरे ।
षट्त्रिंशद्गुणसहिताः श्रीमज्जिनभद्रसूरयोऽभूवन् ॥२॥

तत्पट्टे धरणिपतिसेवितचरणा विजयिनः सन्ति ।
नानालब्धिसमेताः श्रीमज्जिनचन्द्रसूरयो गुरवः ॥३॥

तेषां गुरूणां जितमन्मथानामादेशमासाद्य तु मेरुसुन्दरः ।
श्रीयोगशास्त्रस्य करोति बालावबोधनं मंगलसिद्धिकारणम् ॥४॥

बा० अन्तः— श्रीचौलुक्यकुमारपालस्याभ्यर्थनादाचार्येण श्रीहेमचन्द्रेण गिरां पथि अस्मिन् योगशास्त्रे निवेशिता० ॥

गच्छे वरे खरतरेऽतुलनामधेये सयोगिभूपचयसेवितपादपद्माः ।
श्रीसंयुता विजयिनो जिनचन्द्रसूरिपादा नयन्ति जितमन्मथरोषदर्पाः ॥१॥

तेषां गुरूणामासाद्य प्रसादं सुखकारणम् ।
श्रीवाचनाचार्यवररत्नमूर्त्तिगणिप्रभोः ॥२॥

तत्शा(च्छि)ष्यो वाचनाचार्यमेरुसुन्दर आदरात् ।
श्रीयोगशास्त्रस्य बालावबोधनमचीकरत् ॥३॥

इति परमार्हतश्रीकुमारपालभूपालशुश्रूषिते आचार्यश्रीहेमचन्द्रविरचिते अध्यात्मोपनिष[ द् ]नाम्नि संजातपट्टबन्धे श्रीयोगशास्त्रे द्वादशप्रकाशे श्रीखरतर-गच्छे भट्टारकश्रीजिनचन्द्रसूरिविजयिवाचनाचार्यश्रीरत्नमूर्त्तिगणिशिष्य–वा० मेरुसुन्दरगणिविरचिते श्रीयोगशास्त्रबालावबोधे द्वादशप्रकाशः समाप्तः ॥ ग्रन्थ० २५८८ ॥

[ 2986 ] **अन्तः—** संवत् १७०८ वर्षे कार्त्तिकशुद्ध(दि) १३ शुक्रे श्रीमूलसंघे सरस्वतीगच्छे बलात्कारगणे श्रीकुन्दकुन्दाचार्यान्वये भट्टारकश्रीरामकीर्त्तिस्तत्पट्टे भ०श्रीपद्मनन्दि-तत्पट्टे भट्टारकश्रीदेवेन्द्रकीर्त्तेरुपदेशात् मुनिश्रीधर्म्मभूषण–तच्छिष्यब्रह्मवायजी(जि)-ष्णुना ब्रह्मलालजी–तच्छिष्य ब्रह्मसंघजिब्रह्मलाल्यकेभ्यः दत्ता त्रिभंगीकर्मक्षयार्थम्॥

[ 2989 ] **आदिः—** ॐ सर्वज्ञाय: नमः ॥

वन्दे देवेन्द्रवृन्दार्च्यं नाभेयं जिनभास्करम् ।
येन ज्ञानांशुभिर्नित्यं लोकालोकौ प्रकाशितौ ॥१॥

संस्तवीमि क्रमद्वन्द्वं शेषाणां तु जिनेशिनाम् ।
यत्(ज्)ज्ञानांभोधिमध्यस्थं त्रैलोक्यं पद्मसंनिभम् ॥२॥

विदधातु मम प्रज्ञां जैनशास्त्रावबोधिनीम् ।
श्रीमज्जिनमुखाम्भोजनिर्ग्गता श्रुतदेवता ॥३॥

सिद्धान्तवारिधिश्चन्द्रं नेमिचन्द्रं नमाम्यहम् ।
यस्य प्रसादतो विश्वं हस्तस्थामलकोपमम् ॥४॥

विभाति विशदा कीर्त्तिर्यस्य त्रैलोक्यवर्त्तिनी ।
नमस्तस्मै मुनीन्द्राय श्रीमत्त्रैलोक्यकीर्त्तये ॥५॥

आकरः सर्वविद्यानां धर्म्ममार्ग्गदिवाकरः ।
धर्म्माकार इति ख्यातः स मुनिः स्तूयते मया ॥६॥

वीरदष्टघादिसेनास्यं मिथ्यात्वायरिसंहतौ ।
अतोऽसौ वीरसेनाख्यो जीयादागमपारगः ॥७॥

पुरवाटवंशभूषणजोमनतनयस्य नेमिदेवस्य ।
अभ्यर्थनयारब्धो ग्रन्थोयं भव्यबोधाय ॥८॥

अथ पञ्चगुरून् नत्वा वक्ष्ये संस्कृतभाषया ।
त्रैलोक्यसारमालोक्य ग्रन्थं त्रैलोक्यदीपकम् ॥९॥

अनन्तदेशमाकाशमनन्तं स्वप्रदेशकम् ।
तन्मध्येऽणुरिवाभाति लोकोऽसंख्यप्रदेशकः ॥१०॥

लोक्यते यत्र संघातो द्रव्यानां पृथगात्मनाम् ।
स लोकः कथ्यते सद्भिर्लोकज्ञानविदांवरैः ॥११॥

**अन्तः—** किं चन्द्रः किमु भास्करः किमथवा मेरुः किमम्भोनिधिः
किं धात्री सुखवर्त्म किं किमथवा कल्पद्रुमो विश्रुतः ।
एकैकेन गुणेन विश्रुतिपथप्रस्थायिनस्ते स्वयं
नैते शेषगुणाकरास्त्रिभुवने त्रैलोक्य[व]र्ती स्वयम् ॥४५६॥

अस्त्यत्र वंशः पुरवाटसंज्ञः समस्तपृथ्वीपतिमाननीयः ।
त्यक्त्वा स्वकीयां सुरलोकलक्ष्मीं देवा अपीच्छन्ति हि यत्र जन्म ॥४५७॥

तत्र प्रसिद्धोजनि कामदेवः पत्नी च तस्याजनि नामदेवी ।
पुत्रौ तयोर्जोमन-लक्ष्मणाख्यौ बभूवतु राघव-लक्ष्मणाविव ॥४५८॥

रत्नं रत्नखनेः शशी जलनिधेरात्मोद्भवः श्रीपते-
स्तद्वज्जोमनतो बभूव तनुजः श्रीनेमिदेवाह्वयः ।
यो बाल्येपि महानुभावचरितः सज्जैनमार्गे रतः
शान्तश्रीगुणभूषणक्रमनतः सम्यक्त्वचूलांकितः ॥४५९॥

यस्त्यागेन जिगाय कर्णनृपतिं न्यायेन वाचस्पतिं
नैर्मल्येन निशापतिं नगपतिं सत्स्थैर्यभावेन च ।
गाम्भीर्येण सरित्पतिं मलतंति सद्धर्म्मसद्भावनात् ।
स श्रीमद्गुणभूषणोन्नतिनतो नेमिश्चिरं नन्दतु ॥४६०॥

तत्सत्कारपुरस्कृतेन सततं तज्जैनतादर्शनात्
संतुष्टेन तदार्थवादिसुगुणैर्हृष्टेन पुष्टेन च ।
तस्य प्रार्थनया सुसंस्कृतवचोबन्धेन संनिर्म्मितो
ग्रन्थोयं त्रिजगत्स्वरूपकथनः सत्पुण्यनिर्मापणः ॥४६१॥

वंशे नैगमसंज्ञकेऽजनि सुधीजने प्रतिष्ठाविधा-
वाचार्यो जिनभक्तितत्परमना यो वामदेवाह्वयः ।
तेनालोक्य समस्तमागमविधिं त्रैलोक्यदीपाभिधो
ग्रन्थः साधुकृतो विशोध्य सुधियस्तनुंतु(स्तन्वन्तु) पृथ्वीतले ॥४६२॥

वक्तृ-श्रोत्र्यनुमन्त्री(त्रि)णां विशदं जैनशासनम् ।
भव्यानामर्हतां भूयात् प्रशस्तं सर्वमंगलम् ॥४६७॥

इतीन्द्रवामदेवविरचिते पुरवाटवंशविशेषकश्रीनेमिदेवस्य यशः-प्रकाशके त्रैलोक्यदीपके ऊर्ध्वलोकआ(व्या)वर्णनो नाम तृतीयोधिकारः संपूर्णः ॥३॥

अथ संवत् १६८४ वर्षे ज्येष्ठमास वदिद्वितीयायां तिथौ रविशुभवासरे स्थानेश्वराख्यनगरे सुविविख्यातकुरुक्षेत्रोपकण्ठे साहसलेमीजहांगीरराज्ये श्रीमत्-खरतरमहामुनिगच्छे तत् शिष्यः श्रीरायमल्लाभिधानस्तदन्तेवासी श्रीकर्पूरचन्द्र-मुनिस्तच्छिष्योस्ति श्रीनिहालचन्द्रमहर्षिस्तच्छिष्योस्ति लखकमुनिस्तदन्तेवासिना मुनिमोहनाख्यलेखकेन व्यलीलिखत् त्रैलोक्यसाराभिधानं ग्रन्थम् ।

[ 2991 ] **अन्तः**— इति श्रीपद्मप्रभसूरि-शिष्यश्रीदेवानन्दसूरिविरचितायां स्वोपज्ञसंस्कृत-क्षेत्रसमासटीकायां कालोदधिनामा चतुर्थोधिकारः ।

[ 2997 ] **मू०आदिः**— महोपाध्याय श्री ५ कनकविजयगणिगुरुभ्यो नमः ।

**वृ०आदिः**— नत्वा श्रीवीरजिनं संदर्शितविश्वविश्ववस्तुचयम् ।
श्रीक्षेत्रसंग्रहण्या वृत्तिं कुर्वे यथाशक्ति ॥

मू०अन्तः— इति श्रीजम्बूद्वीपसंग्रहणी समाप्ता । संवत् १६७५ वर्षे फा० वदि ७ दिने सीरोहीनगरे लिखिता ।

वृ०अन्तः— नित्यं श्रीहरिभद्रसूरिगुरवो जीयासुरत्यद्भुत-
ज्ञानश्रीसमलंकृताः सुविशदाचारप्रभाभासुराः ।
येषां वाक्प्रपया प्रसन्नतरया शास्त्राम्बुसंपूर्णया
भव्यस्येह न कस्य कस्य विदधे संतापलोपोऽवमौ ॥१॥

वित्ते(चैत्रे) श्रीकृष्णगच्छे श्रव(म)णपरिवृढः श्रीप्रभानन्दसूरिः
क्षेत्रादेः संग्रहिण्या अकृत समयगैः संवदन्तीं सदार्थैः ।
एतां वृत्तिं ख-नन्द-ज्वलन-शशि(१३९०)मिते विक्रमाब्दे चतुर्थ्यां
भाद्रस्य श्यामलायामिह यदनुचित तद् बुधाः शोधयन्तु ॥२॥

इति क्षेत्रसंग्रहणीवृत्तिः समाप्ता ।

[ 3010 ] आदिः— श्रीवीरजिनवरेन्द्रं सर्वैकान्ततमोरविम् ।
नत्वा नव्यबृहत्क्षेत्रसमासो ह्यवचूर्ण्यते ॥ १ ॥

ऐदंयुगीनान् जनान् संक्षिप्तरुचि(ची)नपेक्ष्य भगवद्भिः ।
श्रीसोमतिलकसूरीश्वरैर्विदधेऽमदार्थैः ॥२॥

अन्तः— स्फूर्जद्गुणप्रकरवासितविष्टपाना
श्रीदेवसुन्दरमहत्तमसूरिराजाम् ।
शिष्योऽवचूर्णिमकारोद् गुणरत्नसूरिः
संस्कारबोधविधये स्वपरार्थमेताम् ॥१॥

श्रीवृद्ध(बृहत्)क्षेत्रसमास-क्षेत्रसमासलघुवृत्ति-बृहद्वृत्तीर्विलोक्य भट्टार[क]-प्रभुश्रीज्ञानसागरसूरिपादकृतावचूर्णिः विरचितेयम् ॥

इति श्रीसोमतिलकसूरिविरचितस्य नव्यबृहत्क्षेत्रसमासस्यातिगंभीरार्थस्य कण्ठपीठलुठिता चातुर्विधभट्टारकप्रभुश्रीज्ञानसागरसूरिपादकृतावचूर्णिर्विरचितेयम् ।

इति श्रीगुणरत्नसूरिपादविरचिताऽवचूर्णिः समाप्ता ।

[ 3015 ] आदिः— संप्रतिधातकीखण्डवक्तव्यतामाह ॥

(मू०) चत्तारिसयसहस्सा धायइखण्डस्स होइ विक्खंभो ।
चत्तारि य से दारा विजयाई मुणेयव्वा ॥१॥

अन्तः— अधुना क्षेत्रसमासप्रकरणे पठनाय श्रवणाय च प्रवृत्तानामुत्तमफलसंप्राप्ति-विषयमाशीर्वादमाह-

(मू०) समयखित्तसमासं जो पढइ यज्जोयणं(?) निसामेइ ।
तेसिं सुयंगदेवी उत्तमसुयसंपयं देउ ॥

योऽमुं क्षेत्रसमासं सम्यग्भावसारं पठति यश्च निशामयत्याकर्णयति
तेभ्यः श्रुतांगदेवी द्वादशांगश्रुतरूपिणी उत्तमां श्रुतसंपदं ददातु ।
जिनवचनगतं विषमं भावार्थं यो विवेच्य शिष्येभ्यः ।
इत्थमुपादिशदमलं परो[प]कारैकरक्तचेताः ॥१॥

तं नमत बोधजलधिं गुणमन्दिरमखिलवाग्मिनां श्रेष्ठम् ।
चरणश्रियोपगूढं जिनभद्रगणिक्षमाश्रमणम् ॥२॥

वाचः क्व तस्य गम्भीराः परभागमुपागताः ।
क्व चाहं जडधीरेष स्वल्पशास्त्रकृतश्रमः ॥३॥

तथापि गुरुपादारविन्दद्वन्द्वप्रसादतः ।
जातकिञ्चिन्मतिस्फूर्तिरेनां टीकां व्यधामहम् ॥४॥

यद्गदितमल्पमतिना जिनवचनविरुद्धमत्र टीकायाम् ।
विद्वद्भिस्तत्त्वज्ञैः प्रसादमाधाय तच्छोध्यम् ॥५॥

इममतिगम्भीरतरं क्षेत्रसमासं विवृण्वता कुशलम् ।
यदवापि मलयगिरिणा सिद्धिं तेनाश्नुतां लोकः ॥६॥

अर्हतः शरणं सिद्धान् शरणं संयतानपि ।
शरणं जिननिर्दिष्टं धर्मं शरणमाश्रिताः ॥७॥

अर्हन्तो मंगलं सिद्धमंगल मम साधवः ।
मङ्गलं मङ्गलं धर्मस्तान्मंगलमशिश्रियम् ।

इति श्रीमलयगिरिविरचिता क्षेत्रसमासटीका पारमुपागमदिति ॥

इति बृहत्क्षेत्रसमासवृत्तिः संपूर्णमिति ॥

(अन्य हस्ताक्षरोल्लेखः—) रायकंवरकी ॥

[ 3024 ] **आदिः—** प्रणिपत्य परमभक्त्या चतुर्विंशातिशयसंयुतं वीरम् ।
वक्ष्ये सुखावबोधा क्षेत्रसमासस्य वृत्तिमहम् ॥१॥

**अन्तः—** इति क्षेत्रसमासवृत्तिः समाप्ता । विरचिता श्रीहरिभद्रसूरिभिः ॥
पंचाशीते वर्षे विक्रमतो व्रजति शुक्लपञ्चम्याम् ।
शुक्रवारसौम्ये पुष्ये शस्ये च नक्षत्रे ॥१॥

लघुक्षेत्रसमासस्य वृत्तिरेषा समासतः ।
कृता विबुधबोधार्थं श्रीहरिभद्रसूरिभिः ॥२॥ युग्मम् ।

सूत्रं सुखाद् बोधयन्ती वृत्तिरेषा तु सत्फला ।
आचन्द्रार्कं श्लोकस्यैकादशपंचशतीमिति ॥३॥

अंकतो ग्रंथा० ५०११ ॥

[ 3038 ] **अन्तः—** श्रीधर्मघोषगच्छे भट्टारकश्रीश्रीनन्दिवर्द्धनसूरीणां शिष्यपाठकगुणरत्नोपदेशेन नाहरगोत्र सं० पट्टा–तत्पुत्र सं० पासा तत्पुत्रसं०लाषण तत्पुत्र सं० खीमसिंघेन प्रतिरियं लेखिता ।

**वृ० अंतः—** इति कतिचि(द्)द्वीपोदधिविचारलेशस्य विवरणं सूरिः ।
श्रीरत्नशेखराख्यः शास्त्रादुद्धृत्य लिखति स्म ॥१॥

यद्वाहं मूढधिया मयाप्यदो विवरणं किमपि लिखितम् ।
तत्र सकलप्रसादाट्टीकाकारस्य मलयगिरेः ॥२॥

मलयगिरिवचनचंदनतर्वनुभावेन विवरणं ह्येतत् ।
गौरवपदं भविष्यति निम्बकदम्बादितुल्यमपि ॥३॥

इह यत्किञ्चिदसु(?शु)द्धं शास्त्रविरुद्धं च लिखितमस्ति मया ।
संसो(?शो)ध्यं (श्री)सूरिवरैः प्रसादमाधाय तत् सर्वम् ॥४॥

अर्हत्सिद्धाचार्योपाध्यायाः साधवश्च सु(?शु)द्धदृशः ।
सज्ज्ञानाः सच्चिरित्रा(?ताः) सत्तपसः श्रेयसे सन्तु ॥५॥

इति लघुक्षेत्रसमासविवरणं समाप्तमिति ॥

[ 3040 ] **स्त० आदिः—**श्रीवीतरागाय नमः ॥

निःशेषज्ञानविज्ञानदायिने वर्धमानमानम्य ।
स्वपरोपकृतये कुर्वे क्षेत्रसमा[स]स्य सुखबोधम् ॥

**मू० अन्तः—** इति समाप्तं क्षेत्रसमासम् ।

**स्त०अन्तः—** संवद्रससाधयन्तस्कन्दाननकुमुदबान्धव(१६२६)प्रमिते ।
इषशुदिविजयदशम्यामुदयपुरे नियतसुविदिते ॥१॥

श्रीमत्खरतरगच्छे स्वच्छे श्रीसाधुधर्मगणिमुख्याः ।
तच्छिष्यसहजरत्ना जयन्तु शरदः शतं जगति ॥२॥

तस्याश्रवेषु मुख्यो नाम्नोदयसागरः श्रुताधारात् ।
क्षेत्रसमासप्रकरणबालविबोधं सुसंक्षिप्तम् ॥३॥

गंगाजलनिर्मलया संवृताकारया तपस्विन्या ।
मन्त्रिधनराजसुतया सुगंगयाभ्यर्थितो व्यदधत् ॥४॥

मतिमान्द्यतः प्रमादात् समयविरुद्धं च लिखितमत्र मया ।
संशोध्यं श्रुतवद्भिः प्रसादमाधाय तत् सर्वम् ॥५॥

पञ्चभिः संबन्धकुलकम् ।

बाहु–मुणी–रस–चन्द्रे( १६७२ )कार्त्तिकमासे शुक्लपक्षे द्वा( द )श्यां भृगुवासरे ॥

संवत् १६८८ वर्षे आसोमासे सुकुल(शुक्ल)पक्षे पंचमीतिथे(थौ) रविवारे । सेरपुरे लिषितं ऋषिश्री५लक्ष्मीदास-तत्शिष्येन थीजजी लिपीकृता इयं पुत्रका(पुस्तिका) स्वयं वाचनार्थम् ॥

[3041] **मू० आदिः**—ऐँ नमः ॥ ॐ नमस्तत्त्वदर्शिने परमेष्ठिने वीतरागाय ।

वीरं जयसेहरपयपइठ्ठियं पणमिऊण सुगुरुं च ।
मंदोत्ति ससरणठ्ठा खित्तवियाराण वोच्छामि ॥१॥

**मू० अन्तः**— सूरीहिं जं रयणसेहरनामएहिं अपच्छमेव रइयं नरखित्तविक्खं ।
संसोहियं पयरणं सुयणेहिं लोए पावेउ तं कुसलरंगमयं पसिद्धम् ॥२६२॥

इय खित्तसमासपक[र]णस्स छठ्ठो अहिगारो सम्मत्तो ॥१॥

संवत् १७०६ वर्षे वदिदशम्यां गुरुवासरे कडीनगरे ऋषिश्री५ हरराज-तत्शिष्य ऋषिश्री ५ वीराजी-तत्शिष्येण विष्णुदासेन ब्यालेखि स्वात्म-पठनार्थम् ।

**वा० आदिः**—ऐँ नमः ॥ ॐ नमस्तत्त्वदर्शिने वीतरागाय श्रीं नमः ॥

निश्शेषकर्मदलनं श्रीदेवार्य प्रणम्य सद्भक्त्या ।
स्वपरोपकृतये कुर्वे क्षेत्रसमासस्य सुखबोधम् ॥१॥

ग्रंथनो आदि मंगलाचरणनी गाथा कहइ छई ॥ वीरं जय० ग्रंथनउ करणहार श्रीरत्नशेखराचार्य इम कहइ छइ ।

[ 3042 ] **सूचनम्**— प्रशस्तिस्तावत् No 3040 वद् ज्ञेया ॥

[ 3044 ] **सूचनम्**— प्रशस्तिः No. 3040 वद् ज्ञेया । विशेषस्तावदयमेव—

श्रीपूज्यके शिष्यने पुस्तक लिषी प्रधान ।
पढत सुणत गुण उपजै अम्बालानगर सुथान ॥
जा(या)दिशम्० ॥

संवत् अठारासय छव्वी भाद्रवमासे शुक्ले पक्षे तिथौ पडवां शुक्रवारे लिषाप्तं श्रीपूज्य आचार्य जयगोपालस्वामिजी लिषाप्तं पगधूर मूलाऋष आत्मार्थे पठनार्थम् ॥

[ 3045 ] **आदिः**— ...इ गच्छि भट्टारकश्रीजयतिलकसूरिनइ पाटि गच्छनायकभट्टारक श्रीरत्न-सिंहसूरिनइं सानिध्यइं प्रसादि श्रीजयतिलकसूरिनु शिष्य पंडित दयासिंहगणि बालावबोध वार्त्तारूपपणइं लिखइ छइ नवुं करइ छइ सुखावबोधपणानइ काजिइं गच्छनायकभट्टारकश्रीरत्नसिंहसूरि सद्गुरुनइं उपदिसनइं करी ॥

[ 3046 ] **आदिः**— अर्हमिति ब्रह्मपदं परमेष्ठिवाचकं सिद्धम् ।
ध्यायामि धवलममलं मूलं सकलार्थसिद्धीनाम् ॥१॥

अर्हं-अर्हमिति ब्रह्मपदं ध्यायामि हूं ब्रह्मज्ञानानु पद पंचपरमेष्ठिनि ध्याउं.........

तपापक्ष वडोपोसालश्रीरत्नाकरसूरिनि गच्छिं भट्टारकश्रीजयतिलकसूरिनुं शिष्य पंडितदयासिंहगणि बालावबोध वार्त्तारूपपणि लिषि छि मदूं करि छि सुखावबोधपणानि काजि०......

**अन्तः—** इति श्रीक्षेत्रसमास श्रीरत्नशेखरसूरिकृत सूत्रनउ बालावबोधः समाप्तः ॥ अक्षरांकगणवि श्लोकसंख्या ४११७ एकचत्वारिंशद्शतसप्ताधिकानि ॥

संवत् १७४३ वर्षे शाके १६०८ प्रवर्त्तमाने कार्त्तिकमासे शुक्लपक्षे ९ तथौ भृगुवासरे लिखितमिदं पुस्तकं स च वाच्यमानः श्रीर्भवतु ॥ ग्रन्थाग्रम् ४११७ यंत्रना हूआ श्लोक ७५ ॥

[ 3047 ] **मू० अन्तः**—इति श्रीलघुक्षेत्रसमास संपूर्ण लिखितं संवत् १८५५ ना वर्षे माहासुदि १३ दिने। सकलभट्टारकश्री१०००८वारश्रीजीविजयजिनेन्द्रसूरीस्व(श्व)रजी चिरंजीवी घणी हुज्योजी दासानुदास पं०कांतिविजयग०लिपीकृत्तां(तम्)।

**स्त० अन्तः**—इति श्रीलघुक्षेत्रसमास संपूर्णम्।

हवें एहनो कर्त्ता कहें छइं श्रीपूज्य पार्श्वचंद्रसु(सू)रीश्वरकृतं प्रतिबिम्ब विलोक्य श्रीराजचंद्रसूरीविजयमाने ऋषिश्रीश्रवणसुशिष्येन वाचकमेघराजेन किंचित् विशेषतो वार्त्तिको विहित[:] संशोधनीयोयं ध्यायनें ल०पं०कांतिविजयेन।

सं० १८५६ ना वर्षे आसोसुदि ११ दिने बुधवासरे पोलीयामध्ये।

[ 3060 ] **आदिः—** अनंतज्ञानकलितं हृतदोषं महोदयम्।
त्रैशलेयजिनेन्द्रस्य नत्वा पादाम्बुजद्वयम् ॥१॥

श्रीविमलहर्षवाचकचरणानभिवंद्य कल्पतरुसदृशान्।
रचयामि लोकनालेस्तनुधीर्बालबोधममुम् ॥२॥

**बा० अन्तः—** श्रीमत्तपागच्छसुधापयोधौ राकाशशांकस्य तुल्यां(लां) श्रयन्ति।
जगत्प्रमानेदिपदं जयन्ति ते सूरयः श्रीविजयादिसेनाः ॥१॥

तथौवराज्यस्थितिचारुचन्द्रिकावधूतनिश्शेषजनौघतापाः।
समग्रसज्ज्ञानरसाश्च सूरयो जयन्तु [ते] श्रीविजयादिदेवाः ॥२॥

राज्ये तदीये सकलार्थसिद्धौ विराजमाना महनीयमूर्त्तयः।
जयन्तु सिद्धांतपयोधिचन्द्रास्ते वाचकाः श्रीविमलादिहर्षाः ॥३॥

तद्गुरुलब्धमहिम्नाश्चकार बालावबोधमतिरुचिरम्।
स्वार्थाय लोकनालेर्जसविजयाह्वः प्रतनुधिषणः ॥४॥

इति श्रीलोकनालबालावबोधः संपूर्णः। ग्रंथ उभय मीलने २८४ ॥

[ 3063 ] **बा० आदिः**—श्रीमदाप्ती(प्तं) प्रणम्यादौ जगतः स्थितिदर्शकम्।
वक्ष्ये लोकविचारस्य वार्त्तिकं समयानुगम् ॥१॥

**बा० अन्तः**— श्रीमदा(ता) प्रोक्तविधिना लोकनालस्य वार्त्तिकम् ।
श्रीमित्रघनराजस्य गंगाख्यतनुजा कृतम् ॥१॥

श्रीमत्सहजरत्नेन व्याख्यातमुदयाद्विमा ।
असंगतं यदुक्तं तद् विशोध्यं धीधनैर्भृशम् ॥२॥

इति श्रीलोकनालद्वात्रिंशिकावार्त्तिकं कृता(तं) पूर्णा(र्णम् ॥)

[ 3065 ] **स्त० अन्तः**—लोकभिरात्रत्तिरियं (?) विनिर्मिता लोकनालिसूत्रस्य ।
वाचकघनविजयेन स्वपरकृते राजवरनगरे ॥१॥

श्रीविजयदेवसूरीश्वरराज्ये विजयसिंहसूरियुते ।
शशि–वारिधि–शशिसंख्ये वर्षे वरभाद्रपदमासे ॥२॥

ग्रन्थाग्र सूत्रार्थसहितम् २०१ सही ।

[ 3071 ] **अन्तः**— इति श्रीसंग्रहिणी समाप्ता ॥

श्रीमति पूर्णिमापक्षे प्रधानसा(शा)खायां श्रीअणहल्लपत्तनढंढेरपाटकभू-भूषणशाखायां श्रीपूज्यपादैर्नवीननिर्मितायां कृतचातुर्मासकायां भट्टारकश्रीमहिमाप्रभसूरी(रि)–तत्पट्टे श्रीभावप्रभसूरो(रि)शिष्य प्रेमचन्द लिखितम् ॥

[ 3077 ] **अन्तः**— इति श्रीसंग्रहिणी समाप्ता ॥१॥

श्रीमति पूर्णिमापक्षे प्रधानसा(शा)खायां श्रीअणहलपत्तनढंढेरपाटकभूभूषण-शाखायां विशालायां श्रीपूज्यपादैर्नवीननिर्मिताया कृतचातुर्मासकायां भट्टारक श्री ५ श्रीमहिमाप्रभसूरीश्वरचरणसरोजरजोजनितानुभावलब्धसेवशिष्यभावरत्नेनेयं लिखी(पी)कृता लघुशिष्यतेजसीपठनहेतवे । संवत् १७६४ वर्षे प्रौष्ठपदा-मार्त्तण्डदिने ॥

[ 3087 ] **वृ० आदिः**—अत्यद्भुतं योगिभिरप्यगम्यं विधूतनिःशेषतमोवितानम् ।
अचिन्त्यमाहात्म्यजं निरञ्जनं ज्योतिर्जयत्येकमनन्तमव्ययम् ॥१॥

यस्यामृतैर्वचोभिर्जीवत्यद्यापि भव्यलोकोयम् ।
स जयत्यागमजलधिर्जिनभद्रगणिक्षमाश्रमणः ॥२॥

प्रसन्नगम्भीरपदाहितक्रमा मिताक्षरा वर्जितपौनरुक्तया ।
यैर्निर्मिता संग्रहणीयमद्भुता नमो नमस्तत्पदपंकजेभ्यः ॥३॥

**वृ० अतः**— तदेवं व्याख्याता ।

चतुर्विंशतिद्वारात्मिका गाथाद्वयप्रमाणा संक्षिप्ततरा संग्रहणी तद्व्याख्यामाथ श्रीहर्षपुरीयगच्छालंकारमलधारिश्रीमद्अभयदेवसूरि-पट्टरत्नश्रीहेमचन्द्रसूरि–शिष्य-

श्रीचन्द्रसूरिचरणाम्बुजचञ्चरीकेण श्रीमुनिचन्द्रसूरिभ्यो लब्धप्रतिष्ठेन श्रीदेवभद्रसूरिणा विरचिता स्वगुरुप्रणितसंग्रहण्या वृत्तिः समर्थिता ॥

अंगान्युपांगानि तथापराणि विलोक्य शास्त्राणि गुरूपदेशतः ।
विनिर्मिता वृत्तिरियं तथापि शोध्यं यदि स्याद् विबुधैर्विशोध्यम् ॥१॥
निजगुरुपदभक्तेः कुर्वतो वृत्तिमेनां मम समजनि पुण्यं यत् तनो भव्यलोकः ।
जिनपतिमतपोतोत्तीर्णसंसारसिन्धुर्भजतु शिवमनन्तज्ञानदृग्वीर्यसौख्यम् ॥२॥

प्रत्यक्षरगणनातो ग्रन्थमानं विनिश्चितम् ।
पञ्चत्रिंशच्छतान्यत्र श्लोकानां सर्वसंख्यया ॥३॥

इति श्रीसंग्रहिणीवृत्तिरियम् ॥ ग्रन्थाग्रम् ३५०० ॥

संवति १६८७ प्रमिते श्रीस्तंभतीर्थवेलाकूले फाल्गुनशुद्धि-द्वितीयायां भृगुवारे पंडितश्रीजयरत्नगणि-विनेयगणिराजरत्नेन लिखिता स्ववाचनाय ।

[ 3100 ] **बा०आदिः—** नत्वा श्रीवीरजिनं संग्रहणीसूत्रविवरणं किञ्चित् ।
बालानां बोधार्थं वक्ष्येहं लोकभाषाभिः ॥१॥

**बा०अन्तः—** ... ... ... ... ...

संवत् चऊदससत्ताणवइ द्वितीयाश्रावणसुदि चऊदसि शुक्रवासरि तिणि दिवसि तपागच्छि भ०रत्नसिंहसूरिशिष्यइं पण्डितदयासिंहगणिए बालावबोध रचिउ समस्त मांगलिकमइं विषई हुइं संग्रहणीबालावबोधसप्तदशशतपंचाशत् श्लोकसंख्या समाप्ता ॥

संवत् १६१० वर्षे पोसवदि ७ गुरौ लिखितो(तः) पत्तनमहानगरे ।

[ 3101 ] (अन्यदीयहस्ताक्षरेणोल्लेखः—)

**अन्तः—** श्रीजिनचन्द्रसूरिराज्ये आज्ञावल्लरिगणिनीपठनार्थं लिषापिता सा च श्रीजिनभद्रसूरिसंतानीये वा०हर्षविजयगणिवराणां प्रदत्ता ।

संवत् १६७९ वर्षे आसकार्त्तिकशुदि ३ दिने आसपुरानइ संघि परति वहरावी ।

[ 3105 ] **बा०आदिः—** श्रीपार्श्वनाथं फलवर्धिकाख्यं गुरुंश्च श्रीमज्जिनदत्तसूरीन् ।
गीर्देवताभाष्यसुधासमुद्रं क्षमाश्रयं श्रीजिनभद्रनाम्ना ॥१॥

निर्मथ्य जैनागमवारिराशिं प्रकाशिता यैरियमप्रपंचा ।
श्रीचन्द्रसूरीन् प्रणिपत्य सम्यक् करोमि तां संग्रहणीं स्फुटार्थाम् ॥२॥ युग्मम् ।

श्रीहर्षसारगुरुराजहितप्रसाद—
माधाय चेतसि चिदर्थकृतेऽप्रमादः ।
तस्माद् विसु(शु)द्धवचनो विगतावसादो
व्याख्यां स्फुटां शिवनिधानगणिर्वितेने ॥३॥

इहां शास्त्रनी आदिइं शिष्टाचार पालिवा भणी विघ्न निवारवा भणी मंगल करइ ।

अन्तः— दिठ्ठी दंसणमाणे जोगुवओगोववायचवणठिई ।
पज्जत्ति किमाहारे सन्नी गई आगइ वेए ॥१॥

[3109] स्त०अन्तः—मलधारगच्छे श्रीहेमचन्द्रसूरि तेहनइं शिष्यइं छेसै विरची कीधी सम्यग् प्रकारइं संघयणरत्नशास्त्र समृध(द्धि)वंत थाओ जां लगइं श्रीमहावीरनो तीर्थ प्रवर्त्तइं तां सीम नंदउ कृत्ता धर्ममेरुनावचूरिः गाथार्थ ४०० ॥

इति श्रीसंघयणसूत्रटबार्थसंपूर्णम् ॥

सं० १८११ वर्षे शाके १७५७ प्रवर्त्तमाने मासोत्तममासे उत्तममासे कृष्णपक्षे पंचमतिथौ भृगुवासरे तृतीय पोहरे अमृतवेलायां समये लिखित्वा सकलपण्डितशिरोमणीपण्डितश्री श्रीयुक्तिहंसश्री शिष्य-अंतेवासी पं० तिलोकहंस तत्शिष्य मुनिकपूरहंस लिपि(लिपी)कृत्वा(तः) श्रीआऊपुरनगरे ।

[3115] अन्तः— इति श्रीत्रैलोक्यदीपिकानाम संग्रहणी संपूर्णम्(र्णा) ॥

संवत् १८७८ वर्षे ज्येष्ठमासे शुक्लपक्षे १५ तिथौ मंगलवासरे भट्टारक श्रीश्री१००८श्री विजयउदयसूरिजी तत्शिष्यश्री१०८श्रीपं०श्रीगुलाब(?ल)विजयजी मु०हेमविजय पं०श्रीगौतमसत्कलिखिता मु०हेमने स्वार्थे ।

उत्तम जनने वाँचवा वली करवा पर उपगार ।
पढे गुणे जे सांभले तस घर मंगलमाल ॥१॥

श्रीसाणंदनयरे श्रीअमिझरापार्श्वप्रसादात् सही ।

[3119] मू० अन्तः— इति श्रीत्रैलोक्यदीपिकानाम्नी मध्यसंग्रहणी संपूर्णा । संवत् १७६६ वर्षे माहावदि १३ बुधे लिखितमिदं सदारुचिगणिना ।

स्त० अन्तः— इति श्रीत्रैलोक्यदीपिकानाम्नी मध्यसंग्रहणी संपूर्णा ।

लिखितमिदं सकलपंडितशिरोमणिपंडितश्री५श्रीश्रीपुण्यरुचिगणि-तत्शिष्य-सकलपंडितोत्तमपंडितश्री५जीवरुचिगणि-तत्शिष्यसकलपंडितश्री५श्रीनित्यरुचि-ग०-शिष्यसदारुचिगणिना संवत् १७६६ वर्षे फागुणसुदि ४ दिने मध्याह्न-समये त्रैलोक्यदीपिका नाम्नी मध्यसंग्रहणी टबार्थः संपूर्णः श्रीगौडीपार्श्वप्रसादात् ॥

[3125] अन्तः— बाहलबाईवाचनाय ॥

[3138] अन्तः— सप्ततिकावचूरिः समाप्ता । तदेवं कर्मग्रंथषट्कस्यापि समर्थितावचूरिः ॥ सं०१५०७ व० श्रावण व०९ ।

(पश्चात्कालीनोल्लेखः)—

श्रीमत्तपोगणनभोगणभानुकल्पश्रीदेवसुन्दरयुगोत्तमपादुकानाम् ।
शिष्यैर्जिनागमसुधांबुधिमग्नचित्तैः श्रीज्ञानसागरगुरूत्तमनामधेयैः ॥१॥

कर्मग्रन्थविचारावचूर्णिरेषा परोपकारार्थं ।
निधि-वह्नि-मनुमितेऽब्दे(१४३९)परिस्फुटार्था कृता जयतात् ॥२॥

[3139] अन्तः— श्रीमत्तपागणनभोऽर्कयुगोत्तमाभश्रीदेवसुन्दरगुरूत्तमपादुकानाम् ।
शिष्यैर्जिनागमसुधाम्बुधिलीनचित्तैः श्रीसूरिराजगुणरत्नमुनीन्द्रचन्द्रैः ॥५१॥

नन्देषु–मनुमिते(१४५९)ऽब्दे कर्मग्रन्थावचूर्णिरियम् ।
श्रीदेवेन्द्रगणेश्वरकृतविवृतेः स्वात्महितहेतोः ॥

इति सप्ततिकावचूरिः संपूर्णा परमगुरुश्रीमुनिसुन्दरसूरिः ॥

[3145] स्त० आदिः—शारदां वरदां स्मृत्वा नत्वा हीरगुरोः पादौ ।
कल्याणगुरुशिष्येण धननाम्ना विधीयते ॥१॥

कर्मग्रन्थस्य षट्कस्य व्याख्यानमिषतो मया ।
लोकभाषानुसारेण निश्छद्मशिशुचापलम् ॥२॥

स्त० अन्तः—इति सत्तरी संपूर्णा ॥ ग्रन्थाग्रं सूत्रटबासहित पानां ४० ग्रन्थाग्रनो ११११ ।
इति कर्मग्रन्थषट्कसूत्रं समाप्तं टबो संपूर्ण ॥

संयमशतमितवर्षे माघे मासे सिताभिधे पक्षे ।
श्रीवीरगणिमिततिथौ नगरे स्तंभनकपार्श्वयुते ॥१॥

श्रीविजयदेवसूरीश्वरराज्ये प्राज्यपुण्यपुण्यतिथौ ।
कर्मग्रन्थव्याख्या लोकगिरा किन्तु लिखिते ॥२॥

सकलागमकषपट्टश्रीमत्कल्याणविजयशिष्येण ।
वाचकधनविजयेन परोपकारादिपुण्यकृते ॥३॥

औत्सुक्यवशान्मतिमांद्यतश्च वितथा यदत्र लिखितं स्यात् ।
गीतार्थैः संशोध्यं मयि हितहेतु समुद्दिश्य ॥४॥

[3152] अन्तः — भट्टारकश्रीआणंदविमलसूरिस्तत्पट्टे भट्टारकश्रीविजयदानसूरिस्तत्पट्टे जगद्-गुरुभट्टारकश्रीहीरविजयसूरिस्तत्पट्टे संप्रतिविजयमानपातसाहदत्तबहुमानभट्टारकश्री-विजयसेनसूरिस्तन्छिष्यपंडितश्रीशान्तिविजयगणिना कर्मग्रन्थबालावबोधः कृतः स्ववाचनकृत्(ते) ॥ श्रीसूरतिबन्दिरे ।

संवत १६७८ वरषे(वर्षे) अहम्मदाबादमध्ये लिखितम् । कुंअरजी देवदासलिपि(पी)कृतं ह्वाजापटेलप्रपाटके ॥

(अन्यदीयाक्षरैर्लिखितमिदम्—)

**सांबलीवास्तव्य** सं० अग्रजीमाता श्राविका **लाडकी** पं० **शांतिविजयगणिनी** बहिनि तेणीइ ए परति लिखावी ॥

[3157] **मू० आदिः**—सकलपंडितप्रवरपंडितश्री५श्री**खीमविजयगणि**चरणसरोरुहेभ्यो नमः ॥

**बा० आदिः**—प्रणम्य श्रीमहावीरं बालानां ज्ञानहेतवे ।
**कर्मग्रन्थस्य** सूत्रार्थो लिख्यते लोकवार्त्तया ॥१॥

तत्र प्रथम कर्मग्रन्थसूत्रनो बालावबोध लिखिइं छइं । तत्र प्रथम गाथा० ।

**बा० अन्तः**— इति चतुर्थ**कर्मग्रन्थ**बालावबोधः समाप्तः इति भद्रं भूयात् ।

श्री**तपगण**सुरसिन्धुरबन्धुरकुम्भस्थलैकसूरपतयः ।
अभवन् भुवनख्याताः श्री**विजयानन्दसूरि**वराः ॥१॥

तत्पट्टोदयगिरिवरशिखरालंकारचित्रभानुनिभाः ।
श्री**विजयराजमुनीन्द्रा** राजन्ते चन्द्रकीर्त्तिधराः ॥२॥

तेषां श्रीमति गच्छे वाचकनृपचक्रचक्रवर्त्तिनिभाः ।
श्रीम**दकब्बर**भूपप्रतिबोधने विख्याताः ॥३॥

श्री**शत्रुंजय**गिरिवरकरमोचनमुख्यचारुसुकृतकराः ।
श्री**भानुचन्द्र**सञ्ज्ञाः सद्ज्ञाना वाचका आसन् ॥४॥

तत्पदपंकजमधुकरसदृशोपाध्याय**हीरचन्द्रेण** ।
**कर्मग्रन्थ**स्यार्थो लिखितोयं लोकभाषाभिः ॥५॥

बह्व्योपि टीका यदि सुन्दरार्थाः सन्त्यस्य शास्त्रस्य तथापि नूनम् ।
शीघ्रार्थसिद्ध्यै किल बालकानां बालावबोधो लिखितो मयैषः ॥६॥

इह सिद्धान्तविरुद्धं यल्लिखितं मन्दबुद्धिभावेन ।
कृत्वा कृपा विशोध्य त्यक्त्वाऽऽलस्य तकं प्राज्ञैः ॥७॥

श्रीम**द्राघवजी**केन **स्तंभ**तीर्थनिवासिना ।
वाचितो ज्ञानदष्ट्यासौ चिरं नन्दतु भूतले ॥८॥

सकलपंडितमंडलाखंडलायमानपंडितश्री ५ श्री**खीमविजयगणि**-शिष्यगणि-**हेमविजयेन** लिखितेयं प्रतिर्विद्यापुरे ॥

[3169] **बा० अन्तः**— परमगुरु गच्छाधिराज शिथलाचारनिवारक **तपा**-बिरुदधारक भट्टारकश्री-१९ श्री**जगच्चन्द्रसूरी**श्वरपट्टप्रभाकरश्री ५ **देवेन्द्रसूरी**श्वरइं **तपागच्छ**नायकइं ए गाथा ६१ मीनउ अरथ थयउ ॥ ... ... ... ...

कर्मविपाक-टबार्थोन्वर्थः प्राथ्यर्थिभिः स्वगुरुभक्त्या ।
प्रथमादर्शे लिखितो मुनिना कल्याणसोमेन ॥ ४ ॥

इति प्रथमकर्म्मग्रन्थबालावबोधः सम्पूर्णः ॥

[3170] **मू०अन्तः—** जिणपूयाविग्घकरो हिंसाइ परायणो जयइ विग्घं ।
इइ कम्मविवागोऽयं लिहिओ देविंदसूरीहिं ॥६२॥

**बा०अन्तः—** देवनी पूजा तेहनउ विघ्न करइ हिंसादिकनइ विषइ परायण एहनुं विघ्न कर्म बांधइ ए कर्मविपाक श्रीदेवेन्द्रसूरि कहिउ ॥

[3172] **स्त०अन्तः—** श्रीतपागच्छाधिराजभट्टारकश्रीजगच्चन्द्रसूरिपट्टोदयाचलसहस्रकिरणभट्टारक-श्रीदेवेन्द्रसूरिः ॥६३॥

श्रीवाचकप्रसरधर्म्मसागरक्रमाब्जभृंगश्रुतसागराणाम् ।
श्रीवाचकानां शिशुः शांतिसागरकः सत्कर्मविपाकमर्थतः ॥१॥

इति श्रीप्रथमकर्मग्रन्थसुत्रार्थः संपूर्णः ।
संवत् १८७८ ना वर्षे आसोमासे शुक्लपक्षे १२ सोमे लि०मु० रूपविजय ।

इति श्रीप्रथमकर्मग्रन्थसुत्रार्थः संपूर्णः ॥

संवत् गजाद्रि-वसु-चन्द्राब्दे (१८७८) शाके वह्नयब्धि-मुनिशशि-प्रमितेब्दे (१७४३) अश्विनमासे शुक्लपक्षे द्वादश्यां कर्मवाढो(टबां)कुमुदनीवासरे श्रीमद्राजनग्रे नागोरीसरे वास्तव्यः तपागच्छे श्रीपं० खुशालविजयग० शिष्य मु०रूपविजयेन लिषितोयम् ॥ श्रीशंखेश्वरप्रशा(सा)देन चिरं निं(नं)-दन्तु आचन्द्रार्कं भु(भू)यात् । इदिं(य) पुस्तिका पठनार्थे स्वयम् ।

[3183] **बा०आदिः—** त्रिजगत्सृष्टिस्थितिनाशत्रयावस्थितिम् ।
दिशत्यै समाहित्यै त्रिपदी हृद्धच्छियै ॥१॥

[3207] **बा०आदिः—** ऐन्द्र श्रीकरपीडनविधिसिद्धिं ध्वस्तकर्मशलभभरम् ।
कल्याणसिद्धिकरणं जैनं ज्योतिर्जयतु नित्यम् ॥१॥

**बा० अन्तः—** सूरतबन्दिरे। संवत् १९११ कार्तिकशुदि ४ चार रवौ संपूर्णम् ।
भू-मही-नव-चन्द्राब्दे रस-मुनिन्यद्रिभूशाके ।
शितगतिथौ ऊर्जे मासे ... ... ...

सं०१९११ कार्त्तिकशुद्धद्वितीया संपूर्ण श्रीराधिकापुरे लि०व्यास व्रजेराम पठनार्थ साधवी चन्दणसरीजी ।

[3208] **बा०आदिः** – दृष्ट्वा येन भवांकुरकरं दुःकर्मबीजं पुरा
जीवानां बहुदुःखदग्धवपुषां नाशाय तस्य स्वतः ।
निर्दिष्टं कृपयार्थसिद्धिवरदं रत्नत्रयं सादरं
सोयं वो दुरितं लुनातु सततं त्रैलोक्यनाथो जिनः ॥१॥

नत्वा गोपालनामानं गुरुं गुरुगुणालयम् ।
स्वल्पोपि शतकस्यार्थो मतिचन्द्रेण लिख्यते ॥२॥

**बा० अन्तः—** इति श्रीमदंचलिकगच्छीयमतिचन्द्रमुनिविरचितशत[क]बालावबोधः ॥

स्वान्ययोरुपकाराय मतिचन्द्रेण धीमता ।
अर्थदः शतकशास्त्रस्य सुबोधोयं विनिर्ममे ॥१॥

सिंधुदेशनदा रम्ये सामुहानगरे सुधीः ।
आद्यो गुर्ज्जरमल्लोभूत् सदध्यात्ममतानुगः ॥२॥

पाठनाय मया तस्य वृत्तिं विलोक्य सादरम् ।
अगम्यार्थमिदं शास्त्रं कृत गम्यार्थपद्धतिम् ॥३॥

संवत् १७६५ वर्षे मगशिरशुद्ध ६ रवौ वा श्रीसुमतिहंसगणिशिष्य मु०लक्ष्मीहंसलिखितं । श्रीयं(श्रिये) भूयात् । लिखितं गूढामध्ये ॥

[ 3209 ] **अन्तः—** श्रीमत्पाठकराजसारकृतिनां शिष्या जिनाज्ञापराः
श्रीमत्पाठकज्ञानधर्मप्रवराः सद्दीपचन्द्राह्वयाः ।
अर्हत्मार्गसुपाठका गुणलयाः तद्वाक्यसेवानुगः
सूत्रार्थं गणिदेवचन्द्रमतिमान् संदर्शयन् सो(शो)भते ॥१॥

इति श्रीपंचमटबार्थ[:] संपूर्णः ।

संवत् १८८० माघवदि १३ शुक्रे ॥

[ 3216 ] **बा०अन्तः—** समत्यवचूर्णिमिमां शिष्यः श्रीसूरसुन्दरगुरुणा ।
रस-शशि-तिथि(१५१६)मितवर्षेऽलिखत् पुरे वीरमग्रामे ॥१॥
स्वपरोपकारहेतोर्मपिरसमां (?) समयमाणिक्यः ॥

[ 3224 ] **चू०आदिः—** सिद्धिविबंधणबंधुदयसंतखवणविहिदेसओ सिद्धो ।
भगवं भव्वजणगुरू विक्खायजसो जयइ वीरो ॥

एक्कारस वि गणहरा सव्वे वइगोयरस्स पारगया ।
सव्वसुयाणं पभवा सुयकेवलिणो जयंति सया ॥

**अन्तः—** जो जत्थ त्ति जो अत्थो बंधोदयसंतेसु, अपडिपुण्णो खण्डो जाओ अप्पागमेण बद्धो त्ति आगमो सुत्तं अप्पो आगमो जस्स सो तहा तेण अप्पागमेण बद्धो त्ति काउं तं खमिऊण बहुसुता तं अवराहं खमिऊण दोसं अघेत्तण बहुसुता दिट्ठिवायण्णे पूरेऊण परिकहेतुं त्ति तं विगलं अत्थं पूरेऊण सगलं करेत्तु परिकहित्तु भणंतु त्ति ॥७१॥

सभासचुण्णिया सित्तरी समत्ता ॥

[3225] **अन्तः**— सिरिकमलसंजमोवज्झाएहिं अत्थविवरणं कयं ।
कम्मत्थवस्स विहियं भव्वा जाणंतु निसुणंतु ॥१११॥

इति कर्म्मस्तवप्राकृतविवरणं कृतं च ।

सं० १५३४ श्रीपंचम्यां श्रीजिनभद्रसूरि–शिष्यश्रीकमलसंयममहोपाध्यायैः शिष्य वा०मुनिमेरुमुखेनेति भद्रं भूयात् पाठक–पठकानाम् । संघस्य कल्याणमस्तु ॥

[3229] **टी०अन्तः**— इति श्रीमलयगिरिविरचिता कर्मप्रकृतिटीका समाप्ता ॥

संवत् १६६१ वर्षे भाद्रवावदि ७ शनौ लिखितम् ॥ ग्रन्थाग्रम् ८००० लिषापिता च श्रीमत्तपागच्छनभोनभोमणिश्री १९ श्रीविजयसेनसूरिराज्ये पं०श्री आनन्दविजयगणिसाहाय्यात् जेसलमेरुवास्तव्यको० ताल्हण–को०देपा–मांडण-मानाप्रमुखश्रीसंघेनेति । श्रीश्रमणसंघेन वाच्यमाना चिरं जीयात् ॥ गणिबुद्धि-विमलेन शोधिता ।

[3231] **टी०अन्तः**—ज्ञात्वा कर्मप्रपंचं निखिलतनुभृतां दुःखसंदोहबीजं
तद्विध्वंसाय रत्नत्रयमयसमयं यो हितार्थी दिदेश ।
अन्त[ः]संक्रांतविश्वव्यतिकरविलसत्केवलैकात्मदर्श(र्शः)
स श्रीमान् विश्वरूप[ः] प्रतिहतकुमतः पातु वो वर्द्धमानः ॥१॥

सूरिश्रीविजयादिदेवसुगुरोः पट्टांबराहर्मणौ
सूरिश्रीविजयादिसिंहसुगुरौ शक्रासनं भेजुषि ।
सूरिश्रीविजयप्रभश्री(?।श्र)तवति प्राज्यं च राज्यं कृतो
ग्रन्थोयं वितनोतु कोविदकुले मोदं विनोदं तथा ॥२॥

सूरिश्रीगुरुहीरशिष्यपरिषत्कोटीरहीरप्रभाः
कल्याणाद् विजयाभिधाः समभवंस्तेजस्विनो वाचका[ः] ।
तेषामन्तिषदश्च लाभविजयाः प्राज्ञोत्तमाः शाब्दिक-
श्रेणिकीर्त्तितकान्तिकांविधुरुचिप्रस्पर्द्धिकीर्त्तिप्रथाः ॥३॥

तच्छिष्याः स्म भवन्ति जीतविजयाः सौभाग्यभाजो बुधाः
भ्राजन्ते सनयाः नयादिविजयास्तेषां सतीर्थ्या बुधाः ।
तत्पादांबुजभृङ्गपद्मविजयप्राज्ञानुजन्मा बुधा-
स्तत्त्वं किंचिदिदं यशोविजय इत्याख्याभृदाख्यातवान् ॥४॥

इदं हि शास्त्रं श्रुतकेवलिस्फुटाधिगम्यपूर्वोद्धृतभावपावनम् ।
ममेह धीर्वामनयष्टिवद् ययौ तथापि शक्त्यैव विभोरियद्भुवम् ॥५॥

प्राक्तनार्थलिखनाद् वितन्वतो नेह कश्चिदधिको मम श्रमः ।
वीतरागवचनानुरागतः पुष्टमेवं सुकृतं तथाप्यतः ॥६॥

इति श्रीकर्मप्रकृतिः ॥

[ 3232 ] **आदिः—** सिद्धाण नमुक्कारो अट्ठकम्माण पयडियविसुद्धं ।
जीवाण बोहणत्थं सव्वे दुक्खाण उद्धरणं ॥१॥

**अन्तः—** इति कम्मपयडिबत्तीसी समाप्तं संपूर्णम् ॥ श्री ॥

[ 3246 ] **आदिः—** यस्यान्तःसभमायतांसलभुजास्तम्भं श्वतस्रः समं
भान्ति स्म च्युततान्तिकान्तिलहरीलोलत्त्रिलोकश्रियः ।
शङ्के बल्गदुदग्रविग्रहभवोपग्राहिकर्मद्विषा-
ऽमा स्यूता विजिगीषया भगवता पायात् स वीरो जिनः ॥१॥

इह हि भगवदागमेषु बहुधा निर्णीतमायतनानायतनविभागं धीशतया यथावदधिगामुका अप्यधीशतया कदभिनिवेशास्कन्दितमानसा मानसानुमर्त्तिच्छत्राधिरोहप्ररोहदुच्चावचवचनाडम्बराः केचित् सिताम्बरा आयतनमेवार्हद्बिम्बं न तु कथंचिदनायतनमभीति बाहुदण्डमुद्धृत्य मुग्धेभ्यः प्रतिदिशमनिशमुपदिशन्तः श्रीगूर्जरत्रोदरे श्रीमदाशापल्लीपुरेऽसंख्यसंख्यावन्मुख्यस्वपक्षपरपक्षसामाजिकसमाजसमक्षं बहुशो निःप्रत्यव्याकरणीकृत्यास्माभिः सिद्धान्तरहस्यसुधारसं पायिता अपि भाग्यविपर्ययात् तमुद्वम्य स्ववसतिकोणके प्रविश्य प्रतिपदमसभ्यवाग्वर्षणेन स्वयमेव प्रकृतप्रमेयस्य सभानर्हतां सूचयन्त आजन्मप्रीतोत्सूत्रसूत्रणविषोद्गारप्रकारं प्रेक्षावतामनुपादेयं प्रमेयं चिकीर्षन्तः प्रकृतिस्वच्छस्य कज्जलसन्निधेः कालिमावभासिनः स्फटिकस्येव निसर्गायतनस्य पार्श्वस्थादिपरिग्रहेणानायतनतया प्रतिभास्वरस्यापि तस्यायतनत्वसिद्धयेऽनुमानप्रमाणमेवमुपन्यस्यन्ति आशापल्लीवदनतिलकायमानोदयनविहारान्तर्वर्तिन्यर्हद्बिम्बानि यतिगृहिणां वन्दनीयानि, परतीर्थिकाऽपरिगृहीतत्वे सति श्वेताम्बरयतिप्रतिष्ठितार्हद्बिम्बत्वात् यदेवं तदेवं यथोभयवादि संप्रतिपन्नमनिश्राकृतं, तथा चैतानि, तस्मात् वन्दनीयानि इति ।

**अन्तः—** अतो गीर्वाणप्रभुणेत्यादि त्वद्वाक्यमुत्तानवावदूकप्रलापकल्पं तदेवमलमेभिर्भवत्प्रयुक्तैर्जात्युत्तरैरुन्मत्तप्रलापैरिव बालकेलिकारैः यच्च सोत्प्रासभङ्गि सभासदम् । समक्षमिति स्वयं स्वावदातोत्कीर्तनं तदद्याशापल्ल्यां तदान्यदुपासकदण्डनायकश्रीअभयडप्रभृतिसभासदां समक्षं यदभूत् तत् सर्वत्र गुर्जरत्रायां प्रतीतम् । अथ स्ववसतिकोणके तदा स्वस्य गेहे नर्दिता प्रकाशनमात्रमेव । यद्यपि पितुः प्रबोधविषये इत्यादि तत्रायं पुण्यात्मा विधिचैत्यादिविचारसारक्षोदकोविदशिरःशेखरः सा० क्षेमंधरः सकलपवित्रगोत्रपरिवारेण सह प्रभुश्रीजिनदत्तसूरियुगप्रधानप्रकाशितविधिमार्गप्रतिबोधबन्धुरः एवेति स्वकृतप्रकृतवादस्थानकमसिद्धमाप्यत्वान्न सम्यक् साधनमिति भवता स्वयमेव सूचितं सम्यक् साधनं हि स्वसाध्यं साधयत्येवेति । यत् स्वस्मिन् वादस्थले भवतामामूलपर्यन्तमस्मात् प्रतिपदमसभ्यगीर्वाणासारवर्षणं त[त्] कुलव्रतमेतत् । पूर्ववंश्यक्रमो हि तच्चरितमनुवर्तमानैः पाश्चात्यैर्भवादृशैरवश्यं प्रत्युपेक्षणीयः तदुपेक्षणे तदन्तेवासिता प्रवासप्रसंगादिति तदेवं विपक्षपक्षणेन(?) नानासिद्धान्तसंवादपूर्वकमनिश्राकृतानायतनरूपं चैत्यत्रयं व्यवस्थापितम्, ततश्च—

उद्धृत्य श्रुतवारिधेर्मिरवधेः प्राक्सूरिवृन्दारकै-
न्यस्ताशस्य रहस्यसंहृतिसुधासद्मन्थकुण्डे त्वियम् ।
तामेतां प्रसमान उद्धततमोऽपो निरूप्यैषको
निष्कण्ठः कठिनेतराद्भुतगिरा चक्रेण चक्रे बुधः ॥१॥

पूज्यश्रीजिनवल्लभप्रभुपदाभ्यारुरोहद् यशः
सूरिश्रीजिनदत्तदत्तपदवीराजीविनीभास्वनः ।
शिष्यः श्री[जिनचन्द्रसूरिसुगुरोर्विद्यासरस्वानिति
व्यध्वध्वंस(?)विधर्व्यधाज्जिनपतिः सूरिः प्रबोधोदयम्] ॥२॥

इति श्रीवरतरखरतरगणोदयगिरिदिनमणिश्रीजिनपतिसूरिविरचितोद्भूत-पयोनिधिप्रबो[धो]दयनामा वादस्थलग्रन्थः समाप्तः । ग्रन्थाग्रन्थम् २४२५ श्लोकप्रमाणे अक्षेर ३५ ॥

जलाद्यलं मलाद्यलं तथा मूषकराजतः ।
तलबिंदोः पुनः कुर्याद् रक्षामग्नेः सकाशतः ॥

संवति बाणाङ्क-चन्द्राष्टक इति शाके(१८९५), ख-गुणाऽष्ट-रात्रि-(१८३०)प्रमिते सिंहमासेऽसितपक्षे चतुर्दश्यां मंगलवासरे इद पुस्तकम् ।

[ 3247 ] **आदिः**— ऐन्दवमंडलनिर्मलकेवलकमलाविलासपरिकलितम् ।
त्रिदशाधिपतिततिस्तुतमिद्धगिरं वीरमभिगम्य ॥१॥

चतुरधिकारनिबद्धं सुतर्कभाषासमृद्धशुद्धवचः ।
वक्ष्येऽञ्चलमतदलनाप्रकरणमन्योपकाराय ॥२॥

**अन्तः**— अविधिमतविषौषधामेतत् प्रकरणमन्यगुणोपकारहेतुः ।
व्यरचि तत् ख-वसु-देव-भूमितेऽब्दे पुरवरकर्पटवाणिजे च लासे ॥१॥ (१४८०)

सुसाधवः साधु विशोधयन्तु शुद्धाशया ग्रन्थममुं च सम्यक् ।
जीयात् त्वयं वैबुधवाच्यमानः श्लोकः सहस्रेण विशिष्टमानः ॥२॥

इह किंचिदनागमं वचो यदनाभोगवशादिह नोदितम् ।
तदनर्घ्यगुणास्पदं बुधा मम मर्षन्तु सहर्षभूषणाः ॥३॥

इति श्रीतपागच्छनायकप्रभुश्रीसोमसुन्दरसूरिगुरु-शिष्यश्रीमुनिसुन्दरसूरि-क्रमाम्भोरुहभृंग-पं०हर्षभूषणगणिविरचितेऽञ्चलमतदलनप्रकरणं प्रत्यनुमाने द्वितीया-दिदशदृष्टान्तशुद्धिरूपश्चतुर्थोऽधिकारः ।

इति अविधिमतविषौ(षधा)पराह्वयं, प्रकरणं ग्रन्थाग्रम् १००० । संवत् १४८० पुष्यार्के समर्थितः कर्पटवाणिज्ये लासे च ।

अथ गुर्वावली—

श्रीवर्द्धमानविभुशिष्यश्रीगौतम-सुधर्मस्वामिसन्ताने गुरुपरंपराया द्वादश-वर्षावध्याचाम्लतपस्करणेन तपोगच्छप्रवर्त्तकाः श्रीजगच्चन्द्रसूरयो बभूवांसस्त-

दनुक्रमेण श्रीदेवसुन्दरसूरिगुरवो बभूवुस्तच्छिष्या महीक्षागुरुज्ञानसागरसूरिपितृ-धर्मगुरुश्रीकुलमण्डनसूरि-श्रीगुणरत्नसूरि-श्रीसोमसुन्दरसूरि-श्रीसाधुरत्नसूरयश्चक्षुः-प्रत्यक्षा एव, तेषु तत्पट्टधरा श्रीसोमसुन्दरश्रीगुरवस्तपागच्छाधिराजाः संप्रति विजयन्ते। तच्छिष्याः श्रीमुनिसुन्दरसूरिश्रीजयचन्द्रसूरि-श्रीभुवनसुन्दरसूरि-श्रीजिन-सुन्दरसूरयश्च जगदुद्बोधकास्तत्र नैकप्रासादपद्मचक्र-षट्कारक-क्रियागुप्तक-तर्कप्रयो-गादि नैकचित्रैकाक्षर-द्व्यक्षर-पचवर्गपरिहारादिनैकस्तवमयसुरतरंगिणीविज्ञप्तिनामधे-याष्टोत्तरशतहस्तमितचित्रठकप्रणेतृचातुर्वैद्यवैशारद्यश्रीसमलंकृतश्रीमुनिसुन्दरसूरिक्रम-कमलमरालेन श्रीगुरूक्तसकलसामाचारीप्रवर्तकनिरंतरनिरीहतपः-स्वाध्यायपरपरम-हर्षीभूतपितृपूज्यहर्षसेनगणिप्रसादसंपन्नस्वकर्मलाघवानुरूपसंयमसुकृतभूषणेन हर्ष-भूषणेन श्रीगुर्वादिमनीषिकया ग्रन्थोऽयमलेखि पुराभिरामवृद्धनगरवासिना प्राग्वाट-ज्ञातीयमुकुटेन श्रीदेवगुरुभक्तेन व्य० हरियाकेन भा० हीरादे-पुत्रपाल्हा-पौत्र-सारंग-पुत्रीसरसू-स्नुषामाधूप्रभृतिधर्मकुटुम्बयुतेन स्ववित्तसाफल्यकृते-प्रतिदशकं लेखयता प्रतिरियमलेखि।

संवत् १७६७ वर्षे मार्गशिरवदि ९ रविवासरे तद्दिने श्रीपूर्णिमापक्षे प्रधानशाखायां सकलभट्टारकशिरोमणिभट्टारकपुरन्दरभट्टारकश्री५महिमाप्रभु(भ)सूरि-तत्शिष्यसुविनेयी मुनिलालजीकेनेदं पुस्तकं लिपीकृतम्।

[3248] **सूचनम्**— अस्याः प्रशस्तिः No.3247 वद् ज्ञातव्या।

[3255] **आदिः**— इन्द्रवृन्दनत नत्वा सर्वज्ञं सर्वदर्शिनम्।
ज्ञातारं विश्वतत्त्वानां वक्षे(? क्ष्ये) शास्त्रानुसारतः ॥१॥

कस्मिन् तिथिक्षये जाते का तिथिः प्र(? परि)पाल्यते।
वृद्धौ सत्यां च का कार्या तत् सर्वं कथ्यते मया ॥२॥

**अन्तः**— उमास्वातिवाचः प्रघोषश्चैवं श्रूयते—

क्षये पूर्वा तिथि[:] कार्या वृद्धौ कार्या तथोत्तरा।
श्रीवीरज्ञाननिर्वाणौ कार्यौ लोकानुगैरिह ॥१॥

इति श्रीश्राद्धविधौ प्रतिपादितमस्ति। तस्मात् कदाग्रहं त्यक्त्वा यथावदागमानुसारेण पूर्वाचार्यपरंपरया च प्रवर्तितव्यं परं कदाग्रहेण कृत्वा कुमार्ग-प्रवर्तनं न कार्यं उत्सूत्रप्ररूपणेनानन्तसंसारवृद्धिः तस्मात् सिद्धं चैतत् पूर्णि-माभिवृद्धौ त्रयोदशीवर्द्धनम् लि०पं०देवेन्द्रेण ॥१॥

[3257] **आदिः**— निर्लोठितशाठकमठं त्रैलोक्यप्रथितचारुकारुण्यम्।
प्रणिपत्य श्रीपार्श्वं तपोटमतकुट्टनं वक्ष्ये ॥१॥

**अन्तः**— इति जिनप्रभसूरिकृतं तपोटमतकुट्टनममत्सरः भवति।
सूक्ष्मधिया परिभावयन् बुधजनो विधिमार्गविचक्षणः ॥९९॥

इति तपोटमतकुट्टनशतं समाप्तम् । ग्रंथाग्रम् ११० श्लोकाः ॥
श्रीपूर्णिमापक्षीय भ०श्रीमहिमाप्रभसूरीशक्रमाब्जसेविभावरत्नेनालेखि ।

[3263] मू०आदिः— श्रीमहिमाप्रभसूरिसद्गुरुभ्यो नमः ॥

लक्ष्मीपुण्यगृहेऽणहिल्लपुरके श्रीपत्तने पत्तने
याथार्थ्यं दधतीह रत्नखनितो ढंढेरके पाटके ।
श्रीवीरः कलिकुण्डपार्श्वभगवान् प्रौढिं गतश्श्यामलः
पार्श्वो नाथ इति त्रयो जिनवराः कुर्वन्तु वो मंगलम् ॥१॥

नित्यं स्तोत्रमहैरिहैव भविकैः पुष्पादिभिः पूजितः
सद्भिः साधुगणैर्हृदंबुजपदे संस्थापितो भावतः ।
श्रीपंचासरपार्श्वनाथ इति यः प्रासिद्ध्यमग्रे गतः
सोयं वो विदधातु वांछिततर्तिं चिंतामणीतोधिकः ॥२॥

ध्यात्वा सारस्वतं तेजो महिमाप्रभचित्पदम् ।
पूर्णिमीयगणाधीशश्रीभावप्रभसूरिभिः ॥३॥

प्रतिमाशतकवृत्तेर्वृत्तिरीषत्पृथक् कृता ।
सूत्रमात्रार्थदा शिष्यज्योतीरत्नस्य हेतवे ॥४॥

मू०अन्तः— इति श्रीप्रतिमाशतकं समाप्तम् ॥

संवत् १७९३ मिते माघमासे शुक्लपक्षे सप्तम्यां तिथौ गुरुवारे पूर्णिमागच्छीयभ०श्रीश्रीभावप्रभसूरिभिर्लिखितम् ॥

वृ०अन्तः— जयति सुरनतः श्रीवर्द्धमानो जिनेंद्रो
ददद्भिमतमत्र प्राणिनां कल्पकल्पः ।
जगति जनितसौख्यं शासनं वर्त्तते सद्-
विमलमिह यदीयं गाढमिथ्यात्वभेदि ॥१॥

तत्पट्टाम्बुजभास्करो गणधरः स्वामी सुधर्माऽभवत्
तस्मात् सूरिवराः क्रमात् समभवंश्चारित्रभाजो बुधाः ॥
श्रीचंद्रप्रभनामसूरिरभवन् श्रीपूर्णिमागच्छराट्
तद्वंशे विदितोथ सूरिरिह यो विद्याप्रभो [ नाम ] जित् ॥२॥

तदनु वाग्विजितामरसूरयः समभवल्ललितप्रभसूरयः ।
अजनि सूरिवरो विनयप्रभः प्रवरतत्पदभूषणसन्निभः ॥३॥

प्रविलसन्महिमण्डलकीर्तयश्चरणशुद्धिविराजितमूर्त्तयः ।
सुगुरवो महिमाप्रभसूरयः शुभतदीयपदे गुणभूरयः ॥४॥

तदीयपादांबुजचञ्चरीकस्तदीयया सत्कृपया सुखाढ्यः ।
ख्यातोस्ति भावप्रभनामसूरिः सतीर्थ्यशिष्यादिगणैः समेतः ॥५॥

श्रीश्रीमालिसुवीरवंशकमले श्रीराजहंसोपमो
रामाकुक्षिसमुद्भवो जयतसीदेहांगजो दीप्तिमान् ।
जातो योऽखिलसाधुकारतिलकः श्रीतेजसीश्रेष्ठिराट्
तेन श्राद्धवरेण यत्पदमहो द्रव्यव्ययैर्निर्मितः ॥६॥

सूरिभावप्रभेणास्यां तेनानाभोगतो मया ।
वृत्तौ पृथक्कृतायां यत् तच्छोध्यं विबुधैरसत् ॥७॥

त्र्यकाश्व-भूमिते (१७९३) वर्षे माघशुक्लाष्टमीतिथौ ।
वारे देवगुरौ जाता पूर्णेयं वृत्तिरुत्तमा ॥८॥

इति श्रीमत्पूर्णिमागच्छीयभट्टारकश्रीभावप्रभसूरिसमुद्धृता प्रतिमाशतक-लघुवृत्तिरियं शिष्यउद्योतोरत्नस्य हेतवे संपूर्णा ॥

[ 3266 ] आदिः— सुधर्म्मस्वामिनं नत्वा तदीयवचनानुगम् ।
विशेषशतकं वक्ष्ये शिष्यप्रश्नोत्तरप्रदम् ॥१॥

अन्तः— श्रीमत्खरतरगच्छे श्रीमज्जिनसिंहसूरिगुरुराज्ये ।
साम्राज्यं कुर्वाणे युगप्रधानाख्यबिरुदधरे ॥१॥

विक्रमसंवति लोचन-मुनि-दर्शन-कुमुदबांधव(१६७२)प्रमिते ।
श्रीपार्श्वजन्मदिवसे पुरे श्रीमेडतानगरे ॥२॥

युगप्रधानपदवी श्रीअकब्बरसाहिना ।
येभ्यो दत्ता महाभाग्याः श्रीजिनचन्द्रसूरयः ॥३॥

तेषां शिष्यो मुख्यः स्वहस्तदीक्षश्च सकलचन्द्रगणिः ।
तत्शिष्यसमयसुन्द[र]सुपाठकैरकृत शा[न]कमिदम् ॥४॥

इति श्रीसमयसुन्दरोपाध्यायविरचित विशेषशतकं संपूर्णम् ॥

(सं० १६८७वर्षीयगूर्जरदेशाधिकृतदुष्कालवर्णनम्-)

मुनि-वसु-षोडशवर्षे(१६८७) गुर्जरदेशे च महति दुःकाले ।
मृतकैरस्थिग्रामे जाते श्रीपत्तने नगरे ॥१॥

भिक्षुकभयात् कपाटे जटिते व्यवहारिभिर्भृशं बहुभिः ।
पुरुषैर्माने मुक्ते सीदति सति साधुवर्गेऽपि ॥२॥

जाते च पंचरजतै[र्] धान्यमणे सकलवस्तुनि महर्घ्ये ।
परदेशगते लोके मुक्त्वा पितृ-मातृ-बन्धुजनान् ॥३॥

हाहाकारे जाते मारिकृतानेकलोकसंहारे ।
केनाप्यदृष्टपूर्वे निशि कौलिककुंटिके नगरे ॥४॥

तस्मिन् समयेऽस्माभिः केनापि च हेतुना च तिष्ठद्भिः ।
श्रीसमयसुन्दरोपाध्यायैर्लिखिता च प्रतिरेषा ॥५॥

मुनिरैप्यविजयशिष्यो गुरुभक्तो नित्यपार्श्ववर्ती च ।
तस्मै पाठनपूर्वं दत्ता प्रतिरेष पठतु मुदा ॥६॥

प्रस्तावोचितमेतत् तु श्लोकषट्कं मया कृतम् ।
वाचनीयं विनोदेन गुणग्राहविदां वरम् ॥७॥

ग्रन्थ १८५० ॥

[ 3268 ] आदिः— स्याद्वादामृतसंसिक्ताः कदाग्रहविषापहाः ।
वन्दे जैनेश्वरीर्वाचः परास्तसुमनःशुचिः ॥

इह केचिज्जिनपतिमतानुसारिणोप्यपारतमतमःस्तोमास्तसमस्तशेमुषीविशेषास्तत्तत्कदाग्रहग्रहिलतया सकर्णाभ्यर्णप्रचारपरिहारपरवचःप्रपंचचातुरीधुरीणतया च जनितस्वजनमनोविश्लेषाश्चतुस्त्रिंशदतिशयवतां भगवतामर्हतामपि श्वेतांबरयतिप्रतिष्ठितास्वपि प्रतिमास्वनाभिवन्दनीयतामुपदिशन्ति तान् प्रतीदमनुमानमुपन्यस्यते ।

औष्ट्रिकमतकालकूटकुम्भो भुवनातङ्कनिमित्तमत्र योभूत् ।
उपपत्तिपरंपराप्रहारैः सोयमभञ्जि सभासदां समक्षम् ॥१॥

आसीत् चर्वितवादिगर्वगरिमा श्रीदेवसूरिप्रभु-
स्तत्पादाब्जमधुव्रतः समजनि श्रीमन्महेन्द्रप्रभुः ।
शिष्यस्तस्य पितुः प्रबोधविधये सिद्धान्तसिंधोः सुधा-
मुद्धृत्यास्खलितं विचारमचिरात् प्रद्युम्नसूरिर्व्यधात् ॥२॥

[ 3269 ] अन्तः— इति श्रीसंदेहशतकं संपूर्णम् ॥

श्रीसंडेरगच्छे उपाध्यायश्रीधर्मसागर-शिष्यवा०श्रीदयासागर-शिष्यमु० गुणसागर-मु०वीरसागर-मु०चारित्रसागरलिखितं योधपुरदुर्गे ॥

[ 3270 ] आदिः— सद्भूतभावि प्रविकाशनैकभानुप्रभं वीरजिनं प्रणम्य ।
सम्मील्यसंदेहपदानि वक्ष्ये कियन्त्यपि प्राकृतबोधहेतो. ॥१॥

अन्तः— श्रीवृद्धगच्छाम्बुधिपूर्णचन्द्रश्रीदेवसूरिः सुगुरुर्बभूवे ।
काष्ठाम्बरं यः कुमुदं विजित्य श्रीसिद्धराजं स्ववशं वितेने ॥५॥

तस्यान्वये यस्य बभूव साक्षात् सरस्वतीति प्रथितः पृथिव्याम् ।
सूरीश्वरः श्रीजयमंगलाख्यस्तच्छिष्यवर्योऽमरचन्द्रसूरिः ॥६॥

श्रीधर्मघोषसूरिस्तत्पट्टे सुरगुरोः समप्रतिमः ।
यः कुम्भयोनिमुनिरिव शास्त्रार्णवमापपावचिरात् । ॥७॥

श्रीधर्मतिलकसूरेर्गुरुबन्धुर्ज्ञानकलशनामास्ति ।
विहितस्तेन परेषां संदेहसमुच्चयो ग्रन्थः ॥८॥

श्रीसूरिभिः प्रसादं विधाय संशोधनीय एष तराम् ।
यस्माज्जैनमुनीनामुपयोगस्त्वत्र बहुलोऽस्ति ॥९॥

यावन्मेरुर्धरा यावत् यावत् चन्द्र-दिवाकरौ ।
तावद् विजयतामेष वाच्यमानो विचक्षणैः ॥४१०॥

सारग्रन्थः समाप्तः ॥

[3271] आदिः— श्रीगुरुभ्यो नमः । भट्टारकश्रीविजयदानसूरये नमः । भट्टारकश्रीहीरविजयसूरये नमः । भट्टारकश्रीविजयसेनसूरये नमः । संप्रतिविजयमानगच्छाधिराजभट्टारकसार्वभौमसौभाग्यभाग्यवैराग्यादिगुणगणातिशायियुगप्रधानसमानभट्टारकश्रीविजयदेवसूरये नमः । पूर्वं श्रीविजयदानसूरीणां वचनोत्थापकं० ।

अन्तः— संवत् १६७७ वर्षे भाद्रपदशुक्लत्रयोदशीदिने श्रीखानेरबन्दिरे उपाध्यायश्रीरत्नचन्द्रगणिभिः सागरकुमताहिविषजांगुलीत्यपरनामा हितोपदेश इति प्रसिद्धनामा ग्रन्थः कृतः संपूर्णः ॥

वाच्यमानः श्रूयमाणः पठ्यमानश्च सादरम् ।
लेख्यमानः पुस्तकेषु ग्रन्थोयं मे प्रवर्त्ततात् ॥१॥

सूर्याचन्द्रमसौ यावद् यावत् सप्त धराधराः ।
यावत् तपागणस्तावदय जयतु पुस्तक ॥२॥

इति श्रीकुमताहिविषजांगुलीमंत्रनामकं शास्त्रं संपूर्णम् ।

प्रशस्तिः— संवत् १६८२ वर्षे भाद्रपदवदि ११ दिने गुरुवासरे श्रीसांतलपुरनगरे सं०धूला-सं०वरकण-सं०धरमण-सं०गोकुलप्रमुखोत्तमकुलराजमाने उपा० श्रीरत्नचन्द्रगणिभिर्लिखितं चिरं जयतु ।

इति श्रीकुमताहिविषयजांगुलीमन्त्रनामग्रन्थः संपूर्णः ॥

संवत् १६८१ वर्षे कात्तिकवदिप्रतिपद्दिने रवौ भरण्यां व्यतिपातयोगे श्रीअहम्मदावादे श्रीविजयदेवसूरिभिर्मुक्तिसागरउपाध्यायपदग्रहणपूर्वकं तपागच्छान्निःसृतस्तस्मिन्नेव दिने सागरकुमतं प्रवृत्तम् । तत्र प्रथमं सागरकुमतमूलं मुक्तिसागरः आद्यश्च शांतिदासाख्यः । तदनु संवत् १६८१ वर्षे प्रथमचैत्रशुक्लनवमीदिने पुनर्वसुनक्षत्रे नवमरवियोगे गच्छभेददोषमपास्य श्रीअहम्मदावादे सकलवाचकप्रभृतियतिसमुदायेन सह सकलसंघेन सह महाडंबरपुरस्सरं अहं शिष्योस्मीति वदतः श्रीवि[ज]यदेवसूरीणां श्रीविजयानन्दसूरयः पादान् प्रणेमुः । अथ श्रीतपागच्छो दिनकरः सागरकुमतवार्दलपटलरहितोऽधिकतेजस्वितां प्राप्तश्चिरं जयतु ।

श्रीशत्रुंजययात्रार्थं समागतेन सीरोहीवास्तव्येन सा० तेजपालेनेदं यशस्तिलकं जगृहे ग्रन्थाग्रम् ५१८ ॥

[3274] मू०आदिः— हुंबडकी पचीसी(?) लिख्यते ॥

सिद्धांतः प्रतिपद्यते न भवता यः सांप्रतं वर्तते ।

**मू०अन्तः—** श्रीराानेरपुरस्थढुंढकगणैः सार्द्धं तु चर्चाऽभवत्
तत्प्रत्युत्तरयांचकार मतभित् शास्त्रार्थयुक्त्या पुनः ।
श्रीतेजोविजयाभिधो बुधवरस्तच्छिष्यसंख्याचणः
श्रीज्ञानाद्विजयो रसद्विममये वृत्तैश्चतुर्मासके ॥३६॥

इति ढुंढकछत्रीसी समाप्ता ॥

**स्त० आदिः—** ॥ दिगंबरनो सिद्धांत जिनप्रणीत नथी तेहनी युगति लिषीइं छइं ।

श्रीजिनमुखनिर्गताचारांगसूत्राणि विमुच्य कुन्दकुन्दाचार्यादिकृतप्रकरणानि सिद्धांततया मन्यन्ते तत्र युक्तिर्लिख्यते—

**स्त०अन्तः—** श्रीराानेरपुरवासी ढुंढक साध साथें चर्चा थई, तेहनो प्रत्युत्तर करतो हवो मत ६ भेदं परमतखण्डनयुक्ति अने शास्त्र करीने श्रीतेजविजयनो शिष्य-पण्डितज्ञानविजय चर्चावादी ।

संवत् १७६२ वरषे काव्ये करीने चोमासामे प्रत्युत्तर दीधो ।

[ 3275 ] **आदिः—** श्रीजिनदत्तसूरिसद्गुरुभ्यो नमः ॥

प्रणम्य रम्यशर्मणां कारकं विघ्नवारकम् ।
श्रीवामादारक पार्श्वं भुवनैश्वर्यसाधकम् ॥१॥

प्रौढप्रभावसद्भावाविर्भावकमनुत्तरम् ।
योगिनीनां चतु[:]षष्टेः साधकं निर्विबाधकम् ॥२॥

हृदि स्मृत्वा गुणान् धृत्वा स्फुटं विबुधभाषितान् ।
तस्यैव विविधान् श्रीमज्जिनदत्तगुरुं वरम् ॥३॥ युग्मम् ॥

तद्दूषकं वचोयुक्त्या विदूषकमिवोत्कटम् ।
दूषयामस्सतां दोषान् प्रणयन्तं मुधा मुदात् ॥४॥

**अन्तः—** पर्युषितपूपिकाग्रहणाधि०२८ । साधुसाध्वी सह विहारनिषेधादि०२९ । सगरधुद्धुलादीना द्विदलत्वाधिकारा०३ । इत्युत्सूत्रखण्डनाधिकाराः ॥

संवत् १८९५ रा०मि० पोह बद १० शुक्रवारा ॥ यादृशं० ।

जलाद्रक्षं मलाद्रक्षं तथा मूषकराजतः ।
तैलबिंदोः पुनः कुर्याद्रक्षामग्नेः सकाशतः ॥

सम्वति बाणाङ्क-चन्द्राष्टके(१८९५)रात्रिप्रमिते पोषकृष्णापक्षे १० ।

[ 3276 ] **आदिः—** ॐ श्रीविजयदानसूरिभ्यो नमः ॥

स्वस्ति श्रीमन्तमानन्दज्ञानामृतपयोनिधिम् ।
मत्वा संप्रति तीर्थेशं श्रीमद्वीरजिनेश्वरम् ॥१॥

दुर्मतदकमृगत्रासमृगारिं मृगपुंगवम् ।
श्रीमद्विजयनामाङ्कं नत्वा सूरीश्वरं पुनः ॥२॥

कदाग्रहविमुक्तानां मत्सराग्रस्तचेतसाम् ।
अल्पसूत्रवतां किंचिदुपकारपरायणम् ॥३॥

चामुंडिकमतोत्सूत्रदीपिकां बोधहेतवे ।
यथागुरुवचःप्रीति प्रकुर्वे मृदुभाषया ॥४॥ चतुर्भिः कलापकम् ॥

अत्र औष्ट्रिकमतोत्सूत्रप्रदीपिकायां चत्वारोऽधिकाराः । तत्र प्रथमाधिकारे औष्ट्रिकमतनामव्यवस्थापना ।

अन्तः— श्रीविजयदानसूरीनापृच्छयापृच्छ्य शास्त्रसम्मत्या ।
औष्ट्रिकमतोत्सूत्रोद्धतांधकारप्रणाशपरा ॥१॥

श्रीवीरशासनस्नेहसिक्ता ह्याशासनस्थितिः ।
जीयाद् दुर्वाग्वचोवातैरक्षोभ्या दक्षहस्तगा ॥२॥

मुनीन्दु-षट्-क्षमावर्षे (१६१७) हर्षात् शोभालये पुरे ।
धर्मसागरसंज्ञेन निर्मिताशु प्रदीपिका ॥ ३ ॥ त्रिभिर्विशेषकम् ॥

इति श्रीमत्तपोगणनभोऽङ्गणनभोमणिश्रीविजयदानसूरीश्वरशिष्योपाध्यायश्रीधर्मसागरगणिविरचितायामौष्ट्रिकमतोत्सूत्रप्रदीपिकायामौष्ट्रिकमतोत्सूत्रस्यौष्ट्रिकमुखैर्व्यवस्थापनालक्षणश्चतुर्थोधिकारः ॥६॥

इति औष्ट्रिकमतोत्सूत्रप्रदीपिका ॥

[ 3277 ] मू० अन्तः— इत्यौष्ट्रिकमतोत्सूत्रोद्घाटनकुलकं संपूर्णम् । महोपाध्यायश्री६धर्म्मसागरगणिकृतम् ॥

अव०अन्तः— एवं प्रागुक्तप्रकारेण चामुण्डिकमतोत्सूत्रं खरतरमतोत्सूत्रं गुरुवचनं श्रीविजयदानसूरिवचनं लब्ध्वा अवाप्य मया धर्मसागरेण दर्शितं किमर्थं शीघ्रं निजबोधनार्थमात्मज्ञानार्थमिति ॥१८॥

इति कुलकावचूर्णिः संपूर्णा लिखिता गणिश्रीसौभाग्येण ॥

[ 3280 ] अन्तः— विक्क[म]संवच्छरये पनरसपणहत्तरीसये वरिसे ।
भविआवोहणत्थं जिणपडिमाहुंडिया रइया ॥७॥

एए नाणइहगुणाइ सुआणुसारेण किंच विक्खाया ।
अरहंतसिव जीवा थिरभूए[सु] संपन्ना ॥८॥

इति श्रीमत्तपागच्छाधिराजपरमगुरुश्रीहेमविमलसूरिपादपद्मभृंगेण श्रीसाधुक्रियोद्धरणधीरश्री...... ... ......पवित्रचारित्रगुणविस्फुरत्सार्वत्रिकमहिमचंद्रश्रीआणंदविमलसूरिपादकमसंसेवकेन महाविद्याविचारथप्रमाणियं श्रीकुशलमाणिक्य-

गणिहस्तप्रास्तचारित्रकुमतकुवादगजघटापंचाननबिरुदस्कश्रीजिनप्रतिमाविचारविव-
रणकारिपचकुमूर्त्ति पं० सहजकुसलगणिना द्वितीयनाम्ना पं०श्रीज्ञानर्षिगणिना
श्रीजिनप्रतिमादिविचारयुक्तिहुंडिका विहिता ॥

इति श्रीज्ञानऋषी(षि)कृता हुंडिका संपूर्णा ॥

[ 3282 ] **अन्तः**— एवं पज्जोसवणा संवइ जुत्ता चउत्थि तज्जुत्तो ।
सिद्धन्तधम्मसायर लिहिआ दसगाहसयगेण ॥११०॥

इति श्रीपर्युषणादशशतकं श्रीमत्तपागणनभोनभोमणिश्रीहीरविजयसूरीश्वर-
शिष्योपाध्यायश्रीधर्म्मसागरगणिविरचितर्मिति । संवत १९२२ ना आषाढ वदि
२ दिने सूर्यवारे लिखावितम् ॥ सा०रवचंद जयचंद श्रीराजनगरे वास्तव्य-
श्रीऋषभदेवजीप्रसादात् ॥

**वृ० अन्तः**— प्रकरणकर्त्तुर्नामापि सूचितं बोध्यमिति गाथार्थः ॥११०॥

इति श्रीश्रीमत्तपागणसुविहिताग्रणीहीरविजयसूरीश्वर-शिष्योपाध्याय-
श्रीधर्म्मसागरगणिविरचिता स्वोपज्ञपर्युषणादशशतकवृत्तिरियमिति ।

लिपिकृतं फतेविजेजी श्रीतपागच्छे ।

[ 3284 ] **आदिः**— ॐ नमः श्रीविजयदानसूरिगुरुभ्यो नमः ॥

प्रणम्य परमानंदकन्दं शक्राचितक्रमम् ।
श्रीमद्वीरजिनाधीश विघ्नौघेभमृगाधिपम् ॥१॥

श्रीमद्विजयदानाह्वं नत्वा सूरिनतक्रमम् ।
स्वोपज्ञां विवृणोमि श्रीवीरद्वात्रिंशिकामहम् ॥२॥ युग्मम् ॥

**अन्तः**—इति श्रीविजयदानसूरीश्वर-शिष्योपाध्यायश्रीधर्म्मसागरगणिविरचितश्रीमहावीर-
विज्ञप्तिद्वात्रिंशकावृत्तिः समाप्ता ॥

( अन्यदीयहस्ताक्षरेणोल्लेखः— )

श्रीमत्तपागणनभोङ्गणनव्यभानुश्रीसूरिराड्विजयदानगुरुक्रमाब्जम् ।
संसेव्य भव्यमतिपोतमवाप्य तीर्णं शास्त्रार्णवैस्सकलतार्किकसार्वभौमैः ॥१॥

वादैकलब्धजयवादजनप्रसिद्धाभिरव्यैः कुपाक्षिकमतंगजसिंहनादैः ।
श्रीधर्म्मसागरसुवाचकशेखराख्यैर्द्वात्रिंशिका चरमतीर्थकृतः कृतासौ ॥२॥

श्रीविक्रमान्नयरस(२)रसराजवर्षे(१६६९)श्रीस्तम्भतीर्थनगरेऽनुपमश्रियाढ्ये ।
तद्वन्धुना विमलसागरसंज्ञितेन संशोधितात्पमतिनापि मया स्वबोधम् ॥३॥

( त्रिभिर्विशेषकम् । )

[ 3288 ] **वृ० आदिः**—प्रणम्य श्रीमहावीरं विश्वविश्वार्थदीपकम् ।
सर्वज्ञशतक सम्यग् स्वोपज्ञं विवृणोम्यहम् ॥

[3290] अन्तः— विशेषणवती समाप्ता ॥

कृतिराचार्यजिनभद्रगणिक्षमाश्रमणस्येति । ग्रंथाग्रम् ४१४ ।

[3324] वृ०आदिः— प्रवचनसारोद्धारे विषमपदार्थावबोधमाधत्ते ।
श्रीउदयप्रभसूरिः श्रीपार्श्वाधीशमानम्य ॥१॥

वृ०अन्तः— समाप्तोयं प्रवचनसारस्य विषमपदार्थावबोध इति ।

सपादलक्षक्षोणीशसमक्षं जितवादिनाम् ।
श्रीधर्मघोषसूरीणां पट्टालंकारकारकाः ॥१॥

त्रिवर्गपरिहारेण गद्यगोदावरीसृजः ।
बभूवुर्भूरिसौभाग्याः श्रीयशोभद्रसूरयः ॥२॥

स्व-परसमयज्ञानप्रीतप्रकृष्टजगज्जना-
श्चतुरवचना मोदाघृष्टामरेशगुरुप्रभाः ।
अभिरूपमभं गंगागौरप्रनर्तितकीर्त्तय-
स्तदनु महसः पात्रं जाता रविप्रभसूरयः ॥३॥

एवं प्रवचनसारे तच्छिष्यलवश्चकार टिप्पनकम् ।
श्रीउदयप्रभसूरिर्विषमपदार्थावबोधाख्यम् ॥४॥

इह सन्ति तेपि सिद्धान्तसिन्धुपारीणबुद्धयः ।
सुधियः ह्यात्मभुवां कौस्तुभरत्नायते विश्वम् ॥५॥

प्रवचनसारोद्धारश्रियः समस्तांगसंगसुभगानाम् ।
स्यात् तद्विचारा चर्चा तेषामेषा प्रमोदाय ॥६॥

प्रवचनसारं सारं विषयपदार्थावबोधतः सत्यम् ।
उदयात् सवितुर्विश्वं विश्वमपि सजीवमाभाति ॥७॥

सर्वप्रकारसाहाय्यकारिणः क्षान्तिशालिनः ।
जयप्रभस्य कृतिनः प्रयत्नादेष निर्मितः ॥८॥

अवधानवन्ध्यबुद्धिर्यदत्र न समञ्जसम् ।
उक्तवानहमुत्सूत्रं तत्र मिथ्याकृतं मम ॥९॥

यद्वा यदत्र किंचित् तनुमतिभिर्दुष्टमुदितमस्माभिः ।
प्रीतास्तद्धीमन्तः सन्तः कुर्वन्तु निर्दोषम् ॥१०॥

ग्रन्थाग्रम् ३२०३ सर्वाग्रम् ॥

मुनिचन्द्रसूरि-पण्डितगुणचन्द्राभ्यां भरादिहोपकृतम् ।
प्रथमोत्साहन-वाचन-लेखनकर्मप्रकर्षेण ॥११॥

आकाशकमलं यावन्मेरुनालं हरिद्दलम् ।
भानुर्विकाशयत्येष तावन्नन्द्यादसौ भुवि ॥१२॥
श्रीसिद्धान्तावचूरिः ॥

[ 3334 ] वृ० आदिः— अथ प्रवचनसमयसारसिद्धान्तस्य बालावबोधटीका लिख्यते–

छप्पय छन्दः ।

स्वयं सिद्ध करतार करै, निज करम-सरमनिधि,
आपइ करण स्वरूप होइ माधन साधइ विधि ।
संप्रदानता धरइ आपकौं आप समप्पै,
अपादान आपतै आपकौं करि थिर थप्पै ।
अधिकं–णहे–आवी निज वरतै पूरण ब्रह्म पर,
मूढविधि कारकमय विधि रहित विविध एकविधि अज अमर ॥१॥

दोहरा ।

अमृतचन्द्रकृत संस्कृतटीका अगम अपार ।
तिस अनुसार कहौं कछुक सुगम अलप विस्तार ॥६॥

आगइ श्रीकुंदकुन्दाचार्य प्रथम ही ग्रन्थ आरम्भ विषइ मङ्गलाचरण-निमित्त नमस्कार करइ हइ ॥

वृ० अन्तः— दोहरा ।

मूल ग्रन्थ करता भए कुन्दकुन्द मतिमांन ।
अमृतचन्द्र टीका करी देवभाष परवांन ॥१॥

जैसा करता मूलकौ तैसौ टीकाकार ।
तातै अतिसुन्दर सरस वरतै प्रवचनसार ॥२॥

सकल तत्त्व परकासिनी तत्त्वदीपिका नांम ।
टीका सरसुतादेवकी यह टीका अभिराम ॥३॥

चौपाई ।

बालबोध यह कीना जैसें सो तुम सुनहु कहुं मैं तैसें ।
नगर आगरेमें हितकारी कौंरपाल ज्ञाता अविकारी ॥४॥

तिनी विचार जियमैं यह कीनी जो यह भाषा होइ नवीनी ।
अल्पबुद्धि ती अरथ वषानै अगम अगोचर पद पहिचानै ॥५॥

यह विचार मनमै तिन राषी पांडे हेमराज सौं भाषी ।
आगै राजमल्लनै कीनी समयसारभाषा रस लीनी ॥६॥

अब जो प्रवचन कीहै भाषा तौ जिनधर्म वधै सौ साषा ।
तातैं कहहु विलम्ब न कीजै परभावना अंगफल लीजै ॥७॥

दोहरा ।

अवनीपति वन्दिहिं चरण सुनयकमल विहसंत ।
साहजिहां दिनकर उदै अरिगणतिमर नसंत ॥८॥

दोहरा ।

सत्रहसे नवओतरा(१७०९) माघ मास सित पोष ।
पंचमि आदितवारकौं पूरण कीनी भाष ॥११॥

षट्सहस्र सत तीनि है संख्या मोय प्रधांन (६३००) ।
बिदुष विवेक विचारि करि सुनिज्यो पुरुष प्रधान ॥१२॥

इति श्रीप्रवचनसार–बालबोध पांडे हेमराजजीकृत समाप्त ॥

संवत् १७४५ वर्षे मिती वैशाष वदि ७ तिथौ गुरुवारे लिषतमस्ति । श्रीजेसलमेरुदुर्गे सा०नोडरमल्लजी पुत्र कचरमल्लपठनार्थम् ॥

[ 3341 ] **आदिः**— सिरिवद्धमाणसामियपयजुयल नमिय सुद्धभावेन ।
वुच्छामि समासेणं गुरुवएसेण पगईणं ॥१॥

**अन्तः**— सिरिपल्लिगच्छिणागयसूरिमहेसरस्स भणिय सीसेण ।
अजियामरेण रविणा रईया छावत्तरी गाहा ॥७८॥

इति श्रीविचारप्रकीर्णं समाप्तम् ॥

[ 3342 ] **अन्तः**— धणविसए जा किज्जइ पाडलिपुत्ते पसिद्ध जो राया ।
नाणे जो पत्थिज्जइ तंसि नामेण रइयमिणं ॥८३॥

मुणि–रस–दिणयरसंखे(१२६७) वरिसे विक्कमनिवाउ रइयमिणं ।
कत्तियसुद्धे तेरसि दिणंमि सुगुरुवएसेणं ॥८४॥

इति विचारसारप्रकरणम् ।

[ 3343 ] **अन्तः**— सिरिविक्कमकालाओ राम–तुरगेसु पंचभूमिसु(१५७३) ।
फग्गुणमासे रइयं पगरणमेयं मए विहिणा ॥८५॥

जं दिट्ठं सुयमज्झे संकलीय तह समासओ किंचि ।
सद्दापसद्दमेओ नाय॰वो निउणबुद्धिहि ॥८६॥

सिरिपल्लीगणाहिवेण सूरीसरेणावि महेसरेणेयं ।
कहियं वियारपइन्न पढिज्जमाणं सुहं देउ ॥८७॥

इति श्रीमहेश्वरसूरिकृतं विचार[सार]प्रकीर्णकं समाप्तम् ।

लिखितं संवत् १६८८ वर्षे चैत्रवदि १३ दिने भट्टारकश्री७श्रीविजयाणंदसूरिराज्ये श्रीश्रीमापुरे पण्डितश्री ५ श्रीमानविजयगणिशिष्यपं०अमृतविजयेन वाच्यमानं चिर जयतु ।

[ 3345 ] **आदिः**— नमिऊण वद्धमाणं धम्मनिहाणं जिणागमं सोच्चा ।
वुच्छामि बोहणत्थं कंपि सरूवं जिणक्खायं ॥१॥

**अन्तः**— इति श्रीहेमसूरिकृतं विचारसार[प्]य[र]णं समाप्तम् ।

[ 3346 ] **अन्तः**— सिरिपल्लीगणाहिवेण सूरिवरेणावि हेमसारेण ।
कहिअं विआरपइण्णं पढिज्जमाणं सुहं देउ ॥८७॥

इति श्रीहेमसूरिकृतविचाररत्नं संपूर्णम् । मुनि कुंअरविजयपठनार्थम् ।

[ 3356 ] **आदिः**— वीरं गुरुंश्च वन्दित्वा बालबोधविधायिनः ।
वार्त्ताभिरेव लिख्यंते विचारा[:] कतिचिन्मया ॥१॥

दस चउदस जिणवरे चउदस गुणठाणए नमुं(मं)सित्ता ।
चउदस जीवसमासे समासओ अणुक्कमिंतस्स ॥१॥

दस अनइ चऊद जिणवर । एतलइं चउवीस तीर्थंकर । चऊदसमइ गुणठाणइ रहिया नमस्करीनइं चऊद जीवना स्थानक ते मांहि तेरे जीवने स्थानके समासतउ संख्येपतउ अनुक्रमिइं बालावबोधपणइं बोलिसि ॥

**अन्तः**— एव पंचेद्रीना पांच भेद ॥ ३ तथा नार ... ... ..

[ 3358 ] **आदिः**— सिरिभद्दबाहुपाए कयप्पसाए नमित्तु सुत्ताए ।

**अन्तः**— इय तेसट्ठिसलायापुरिसवियारस्स सत्तरि पढओ ।
भविया सिद्धिसिरिहेमतिलयत्तणमुविंति ॥७५॥

इति सलाकासत्तरीप्रकरण समाप्तम् ॥

[ 3365 ] **आदिः** - महोपाध्यायश्रीधर्मसागरगणिगुरुभ्यो नमः ॥

संपइ वट्टन्ताणं नामग्गहण सुयं च कमजुयल ।
किच्चा मच्चा णच्चा वुच्छागममिह परंपरया ॥१॥

**अन्तः**— वडगच्छसमाचारी पत्तमाहियइट्टविमलगुरूद्धारो ।
सिरिभावसूरिप्पहाणमाहप्पधारंतो ॥३९॥

वट्टन्तेहिं तेहि तेसिं विणयेण सीलदेवेण ।
एवं पगरणमेयं रइय समत्तलाभाय ॥४०॥

इति श्रीविहरमाणएकवीसठाणु संपूर्ण ॥

संवत १६३८ वर्षे श्रावणप्रथमवदि ८ दिने स्वर्णगिरी(रिमध्ये) लिखितमस्ति ।

[ 3377 ] **अन्तः**— सत्तरिसयठाण सम्मत्तं ।

संवत् १८११ वर्षे माघमासे कृष्ण १४ तिथौ शनिवासरे पूज्यप्रवर-पंडित सकलि(ल)गुणनिधान सकलि(ल)मुगटायमणि शुभोपमापूज्यजीश्री १०८श्री-जेसिंघजीऋषि श्री ५ श्रीदेवीचन्दजी लषितं ऋ०भगवान ऋ०श्रीफताजी ऋ०डरजावैः वषता श्रीरस्तु समदडीनगरे ॥

[ 3382 ] **मू०आदिः—** ऐं नमः पार्श्वनाथाय विश्वभावावभासिने ।
यच्छिष्ययुक्तिमाकर्ण्य प्रबुद्धो यः प्रदेशिराट् ॥१॥

**मू०अन्तः—** गच्छेशश्रीविशेषे विजयप्रभगुरौ राज्यशोभां दधाने
क्षेत्रे क्षेत्रज्ञसत्ताप्रकटनपरमोद्दामधामप्रजानाम् ।
इत्थं केशिप्रदेशिप्रतिवचनमयं स्तोत्रमेतन्निबद्धं
राजप्रश्नीयसूत्रात् क० विनयविमलेनेदमानन्दकारि ॥३२॥

**अन्तः—** पं०श्रीविनयविमलग०-शिष्यपं०श्रीधीरविमलग०-शिष्यपं०नयविमलकवि-(वी)श्वरे आनन्दकारक कीधुं ॥३२॥

प्रदेशिनृपप्रश्नस्य वार्त्तिकं बालबोधकम् ।
कविनयविमलेनैतत् लिषितं कविधीरविमलकृते ॥१॥

इति बत्रीसीटबार्थः ॥

[ 3383 ] **आदिः—** कमनखदशकोटीदीप्रदीप्तिप्रदानै-
र्दशविधनतभाजामुज्ज्वलं मोक्षमार्गम् ।
पृथगिव विदधानं पार्श्वमानम्य सम्यक्
कतिचिदवुधवुध्यै वच्म्यहं प्रश्नभेदान् ॥१॥

**अन्तः—** इति प्रश्नशतमेकषष्टियुतं वृत्तरूपं प्रकरणं सटीकं खरतरश्रीजिनवल्लभसूरि-विरचितं समाप्तमिति ॥

[ 3384 ] **वृ०आदिः—** शिरसि यस्य चकासति दीपिका इव फणामणिमस्तकदीप्तयः ।
निखिलभीतितमःशमनाय किं सपदि पार्श्वजिनं विनवीमि तम् ॥१॥

स जयताज्जगतीजनवल्लभः परहितैकपरो जिनवल्लभः ।
चतुरचेतसि यस्य चमत्कृतिं रचयतीह चिरं रुचिरं वचः ॥२॥

तद्विरचितविषमार्थप्रश्नोत्तरषष्टिगतकशास्त्रस्य ।
वितनोमि विवरणमहं सुगमं स्वपरोपकारकृते ॥३॥

**मू० अन्तः—** श्रीमज्जिनवल्लभखरतरपक्षशृङ्गारहारसुविहितविद्वज्जनचक्रचूडामणि-श्रीजिनवल्लभसूरिवराणां कृतिरियम् ॥

काव्ये मदीये चरितापशब्दे यो वेत्ति विद्वानपशब्दमात्रम् ।
तस्याहमाकल्पमनल्पबुद्धेः पादारविन्दं शिरसा नमामि ॥१॥

लिखितं पंडितश्रीकल्याणसागरमुनिवरैः ।

वृ० अन्तः— इति श्रीखरतरगच्छाधिराजश्रीमदभयदेवसूरिपट्टालंकारश्रीजिनवल्लभसूरिविरचिता प्रश्नोत्तरकाव्यवृत्तिरियं समाप्ता ॥

आसीत् पुरा खरतराभिधगच्छनाथः
श्रीमान् जिनेश्वरगुरुः शुभशास्त्रिपांथः ।
सूरिस्ततोपि जिनचन्द्र इति प्रतीतः
शीतद्युति प्रतिमचारुगुणैरुदीतः ॥१॥

तदनु कीर्त्तिभरैरविनश्वराः शुशुभिरेऽभयदेवमुनीश्वराः ।
विहितचंगनवांगसुवृत्तयः परहितोद्यतमानसवृत्तयः ॥२॥

तत्पट्टोदयशैलमौलितरणिः संविग्नचूडामणिः
सूरिः श्रीजिनवल्लभः समभवत् वादीभकुंभे सृणिः ।
तत्पट्टे जिनदत्तसूरिसुगुरुः सर्वाङ्गविद्यावधिः
शुद्धाम्नायविधिः सुधाविधुदधिप्रोद्यद्गुणाम्भोनिधिः ॥३॥

तत्संततौ समजनिष्ट गरिष्ठधामा सूरीश्वरः श्रुतधरो जिनभद्रनामा ।
श्रीजैनचन्द्रगणभृद् गुणरत्नराशेरब्धिस्ततो जिनसमुद्रगुरुश्चकाशे ॥४॥

तत्पट्टराजीवसहस्ररश्मयस्ततो बभुः श्रीजिनहंससूरयः ।
तेषां विनेयैर्विवृतिर्विनिर्ममे यत्नादियं पाठकपुण्यसागरैः ॥५॥

समर्थिता विक्रमसमरेसौ वृत्तिर्वियद्वार्द्धिरसेन्दु(१६४०)वर्षे ।
गुरौ शुभश्वेतसहो दशम्यां श्रीजैनचन्द्राभिधसूरिराज्ये ॥६॥

पद्मराजगणिसन्सहायतायोगतः सपदि सिद्धिमागता ।
वृत्तिकल्पलतिका सनामियं पूरयत्वभिमतार्थसंततिम् ॥७॥

अज्ञानतो भ्रमवशादविमर्शतो वा यत्र किंचिदत्र विवृतं मयका विरुद्धम् ।
तत् शोधयतु सुधियो धृतसाधुवादाः कारुण्यपुण्यमनसो मयि सुप्रसादाः ॥८॥

इति श्रीविवरणकृत्कृतप्रशस्तिरियम ॥ ग्रन्थाग्रम् १५०० ॥

संवति १६८६ वर्षे मार्गशीर्षमासे शुक्लपक्षेऽष्टमीदिने रविवासरे श्रीबृहत्खरतरगणोत्तमे श्रीजिनचन्द्रसूरिविजयिनि राज्ये श्रीजिनवर्द्धमसूरिसंताने श्रीजिनचन्द्रसूरिगणदन्तावलास्तेषां शिष्यवाचकश्रीवरलाभगणिस्तत्संतत्यनुक्रमे पं०क्षेमकलशगणयस्तदंतेवासिना कल्याणसागरमुनिना लिखितमिदं शास्त्रं स्वपठनकृते शिष्याय चेति श्रीरस्तु ॥

[ 3385 ] अन्तः— पं०श्रीजीवविमलगणिशिष्य—पं०जीतविमलगणिना प्रश्नषष्ठिशतकमिदं लिखितं स्वस्मै । ग्रन्थाग्रयम् १७०० ॥

[ 3386 ] अन्तः— इति प्रश्नोत्तरमेकषष्ठिशतं संपूर्णं लिखितमिदम् ॥

बृहस्पतिस्तिष्ठतु मंदबुद्धिः पुरंदरः किं कुरुते वराकः ।
मयि स्थिते वादिनि वादिसिंहे नैवाक्षरं वेत्ति महेश्वरोपि ॥१६३॥

सं० १५०१ माघशुदि ७ शुक्रे लिखितं भुजपुरे ॥

[3396] आदिः— श्रीनाभिभूर्जिनवरः कुशलाय वः स्याद् यस्यांसयोरुपरि कुन्तलभारदम्भात् ।
भव्यांगिनां भवसमुद्भवतापशान्त्यै कादंबिनी किमु समुन्नतिमाततान ॥१॥

विश्वप्रशस्यगुणरत्नसमुद्रचन्द्रपल्लीयगच्छगगनांगणशीतभासः ।
चारित्रपात्रमतिमात्रशमैकसत्रं श्रीसंघपूर्वतिलका गुरवो जयन्ति ॥५॥

तत्पट्टांभोजतिग्मांशुः श्रीदेवेन्द्रमुनीश्वरः ।
भोला-खेताभिधभ्रातृयुगेनात्यर्थमर्थितः ॥६॥

प्रश्नोत्तररत्नमालां विमलाचार्यनिर्मिताम् ।
विवृणोति सुदृष्टांतैः सुपकारी सतां श्रमः ॥७॥ युग्मम् ॥

अन्तः— समाप्ता चेयं प्रश्नोत्तररत्नमालावृत्तिः ॥

भास्वद्भूरियशाः शशांकवदनः कन्दर्पदर्प्पापहः
श्रीजैनागमपारगः शुचिमतिर्वादीन्द्रचूडामणिः ।
विश्वानन्दकरस्तमस्ततिहरः कारुण्यपाथोनिधिः
सूरीन्द्रः स जयप्रभो विजयतां स्फूर्जत्प्रभावश्चिरम् ॥९॥

संवत् १५२३ वर्षे कार्त्तिकशुदि २ शुक्रे चाणसमानगरे चतुर्मासकस्थिते पूर्णिमापक्षे भट्टा०श्रीजयप्रभसूरिभिः स्वयं लिखिता वृत्तिः ॥

[3397] अन्तः— श्रीवर्द्धमानजिनशासनमेरुभूधाभूते सुधर्मगणनायकभद्रशाले ।
श्रीकोटिकाख्यगणकल्पतरौ सुवज्रशाखोऽत्र गच्छ इव राजति चन्द्रगच्छः ॥१॥

तस्मिन् महोज्ज्वलफलोपमितं दधानः श्रीवर्द्धमान इति सूरिवरो बभूव ।
यस्याग्रतः समगृणोद्धरणोरगेन्द्रसूरीन्द्रमन्त्रविविधोपनिषत्प्रकारान् ॥२॥

ततोस्तदोषो नियतं विवस्वान् जिनेश्वरः सूरिवरः समासीत् ।
नोचेत् कथं श्रीधनपालचित्तान्महातमस्तोत्रमपाकरोद् गाम् ॥३॥

तस्मात् बभूवाभयदेवसूरिर्यः स्तंभनापार्श्वजिनेन्द्रमूर्त्तिम् ।
प्रकाश्य शस्याश्च नवांगीवृत्तिः(त्तीः) कृत्वा कृतार्थं स्वजनुस्तताान ॥४॥

तदनु जिनवल्लभाख्यः प्रख्यातः समयकनककषपट्टः ।
यत्प्रतिबोधनपटहोऽधुनापि दंध्वन्यते जगति ॥५॥

ततोजायत सद्विद्यः सूरिश्रीजिनशेखरः ।
यशसोहसितो नोष्णकैलाशं(?) शशिशेखरः ॥६॥

ततः प्रवादिव्रजपद्मचन्द्रः श्रीपद्मचन्द्रः समभून्मुनीन्द्रः ।
यः स्थापयत्येव तमोविवादं अगच्चकारास्ततमोविकारम् ॥७॥

तदनु विजयचन्द्रः सूरिरासीद्तन्द्रः प्रवरसमयवाणीसृष्टिपीयूषवृष्ट्या ।
य इह जगति भव्यारामभारामिको वा वृषकिशलयमालामालितं व्याततान ॥८॥

तस्मादासीत् प्रशममुखगुणैरद्वितीयो द्वितीयः
षट्तर्कग्रन्थवेत्ताऽभयपदपुरतो देवनामा मुनीन्द्रः ।
तस्मात् प्रालेयशैलादिव भुवनजनव्रातपावित्र्यहेतु-
र्जज्ञे गंगाप्रवाहः स्फुरदुरुकमलो रुद्रपल्लीयगच्छः ॥९॥

ततो बभूव श्रीदेवभद्रः सूरीन्द्रशेखरः ।
यत्करांभोजसंस्पर्शो जज्ञिरे श्रीधरा नराः ॥१०॥

अभूत् ततः कृतानन्दः प्रभानन्दमुनीश्वरः ।
यत्र प्रभाप्रमाप्रज्ञाप्रभावाः प्रापुरुन्नतिम् ॥११॥

ततोऽभूच्चन्द्रसूरीन्द्रोऽभूत् स्वतोयं धियाधिकम् ।
विबुध्य धिषणाह्लीणो मीनालयमशिश्रियत् ॥१२॥

तदनुजो मनुजोत्तमवन्दितः समभवद् विमलेन्दुमुनीश्वरः ।
यदुपदेशगिरः परिपीय कैरमृतपानविधौ न घृणायितम् ॥१३॥

ततोजनि श्रीगुणशेखराख्यः सूरिः सुधार्माभिधपत्तने यः ।
शृङ्गारचन्द्रः क्षेत्तिभृत्(?)सभायापत्रावलंबैः कुदृशो जिगाय ॥१४॥

तत्पादांबुजराजहंससदृशः सिद्धांतपारागमः
श्रीमानन्दति सैष संघतिलकः सूरीश्वरः संप्रति ।
यो वादैर्विविधान् बुधानतिबुधान् बुद्धिप्रबंधैरलम् ।
जित्वा कीर्त्तिभरैः पिपर्त्ति भुवनं कर्पूरपूरप्रभोः ॥१५॥

तच्छिष्यः समभूत् सोमतिलकः सूरिनायकः ।
शीलोपदेशमालादिवृत्तयो येन निर्मिताः ॥१६॥

तस्यानुजेन देवेन्द्रसूरिणा विक्रमार्कतः ।
नन्द-युग्म-पयोराशि-शशांक(१४२९)प्रमावत्सरे ॥१७॥

प्रश्नोत्तररत्नमालावित्तिर्विदधे मुदा ।
शोधिता च लसद्भाग्यैः श्रीमुनिभद्रसूरिभिः ॥१८॥ युग्मम् ।
यकाभ्यां कारयांचक्रे वृत्तिरेषा तयोरपि ।
पूर्वजाख्याप्रकटने यत्नः संगतिमंगति ॥१९॥

तथाहि श्रीमदूकेशज्ञातिराभाति भूतले ।
या कल्पलतिकेवार्थिसार्थवांछितदा सदा ॥२०॥

तस्यामनुपमगुणगणसंपत्संपादितासुमत्प्रमदः ।
प्रसव इवास्ति श्लाघ्यो लिंगाभिधानोन्वयो विदुषाम् ॥२१॥

फलोपमस्तत्र पवित्रबुद्धिर्व्यावर्णमानो[स्ति] गुरुप्रकर्षः ।
बभूव पूर्वं हरियाभिधानः साधुर्जिनेन्द्रार्च्चनसावधानः ॥२२॥

तदंगजोभवद् वीरदेवो देवोपमर्द्धिकः ।
विश्वांगे नरीनर्त्ति यदीया कीर्त्तिनर्त्तकी ॥२३॥

तस्यादिमोऽजनि सुतो गजपालसंज्ञो श्रौथक्लृप्तगधिशुश्रयपाःप्रशस्तिः(?) ।
अन्यस्तु निस्तुषगुणो गुणिषु प्रवीणो रीणोदयो धृतहयो जगदेवनामा(?)॥२४॥

आद्यस्य पुत्रो सुकृतस्य सत्रं मांगाभिधानो भरहाभिधश्च ।
संवासितं विश्वयदीयगुणौघकर्पूरभरेण विश्वम्(?) ॥२५॥

क्षेमंधरोजनितरां भरहातनुजः शश्वद्विनिर्मितजिनाधिपपादपूजः ।
तस्य प्रशस्यविनयादिगुणैर्गरिष्ठा जायाजनिष्ट कउडीति दयापदिष्टा ॥२६॥

तयोश्च नामा समजनि तनुजो हरिरिव स्फुरत्सत्यो विश्वावनिजनमनः प्रीतिजनकः(?) ।
तदीया जानगुणमाणिक्यवसतिः सुतेव क्षीराब्धेर्भरणिहिणिरिति क्षीणकलुषा(?)॥२७॥

तयोस्त्रयोंगजना विजयंते गुणा इव ।
भोलोकः खेतसिंहाख्यो नृसिंहश्चेति विश्रुताः ॥२८॥

खेताकस्य सुता भांति खाहिकुक्षिसंभवाः ।
सत्यवीरः सहजाकः समराकश्च सद्गुणाः ॥२९॥

इत्यादिको लिगावंशो वशावत्यर्चशालिनः ।
नन्ददाता जिनमतदिवाकरनिशाकरम् ॥३०॥

बुद्धिमांद्यान्ममात्रासन् या काश्चन वृथा गिरः ।
ताः शोध्याः साधुभिर्यस्माद् बद्धोत्राऽर्थे मयांजलिः ॥३१॥

एतद्वृत्तिविनिर्माणान्मया पुण्य[मु]पार्जितम् ।
तेनास्तु स्वस्तिदायी मे बोधिलाभो भवे भवे ॥३२॥

श्रीमत्प्रश्नोत्तररत्नमालिकाविवृतकल्पलतिकेयम् ।
अनवरतमंगभाजां भवतादभिमतफलाप्तिकृते ॥३३॥

संवत् १५०७ समये भाद्रशुदि ६ गुरुवासरे ।

[3398] वृ० अन्तः—इति श्रीप्रश्नोत्तररत्नमालायां संक्षिप्ता वृत्तिः समाप्ता संपूर्णा ॥

वर्षे वारिधिकाषोडशमिते चैत्रस्य पक्षे सिते
हस्तर्क्षे शुभमे तिथौ हि नयने वारे च प्रद्योतने ।
श्रीमद्वीरजिनेन्द्रतीर्थशिखरे संलेखिता सादरं
राज्यं कुर्वति रत्नसिंहगणभृत् चारित्रचूडामणौ ॥१॥

ओसवंशसुश्राद्धेन वीरदासाभिधेन च ।
प्रश्नोत्तररत्नमालावृत्तिरियं लिपीकृता ॥२॥

यावन्मर्भसि चन्द्रार्का नन्दन्ति च ग्रहान्विताः ।
तावदियं विशिष्टार्था नन्दतु पाठकैः सह ॥३॥ इतिश्री ॥

शुभं भवतु कल्याणमस्तु लेखक-पाठकयोः । चिरं जीयात् ।
श्रीजेसलमेरमध्ये ऋषिश्री५ज्ञानजंताख्यपठनार्थं लिखितमिदं स्वहस्ते पुण्यार्थम् ।

[ 3401 ] **मू० अन्तः**—इति प्रश्नोत्तररत्नमाला संपूर्णा जाता । लिखिता शिष्यपासदत्तेन पं० वीरजीपठनार्थमिति ॥ श्रीसाकंभरीमध्ये लिपी(लिपिं) चकार । श्रीअन्तरीक्ष-पार्श्वनाथप्रसादात् सौख्यम् ।

**स्त० अन्तः**—इति प्रश्नोत्तररत्नमाला समाप्ता सूत्रार्थः कृतश्च श्रीखरतरगच्छाधिराजयुग-प्रधानश्रीजिनरंगसूरिकृतिरियम् ॥श्रीः॥

संवत् १७२० वर्षे माहवदि १२ दिने ॥ अन्तरेव पक्षे ॥

[ 3411 ] **आदिः**— मंगलार्थं नमस्कृत्य देव-सिद्धांत-सद्गुरून् ।
वक्ष्ये प्रश्नोत्तरं ग्रन्थं धर्मव्याजेन केवलम् ॥१०॥

**अन्तः**— उपासकाख्यो विबुधैः प्रपूज्यो ग्रन्थो महाधर्मकरो गुणाढ्यः ।
समस्तकीर्त्यादिमुनिश्वरोक्तः स पुण्यहेतुर्जयताद्धरित्र्याम् ॥४२॥

न कीर्तिपूजादिसुलाभलोभात् कृतः कवित्वाद्यतिमानतो न ।
ग्रन्थोयमत्रैव हिताय स्वस्य परोपकाराय मया विशुद्धये ॥४३॥

अक्षरस्वरसुसंधिपदानि मात्रया रहितमुक्तमपीह ।
ज्ञानहीनत एव प्रमादतस्तत्र क्षमध्वमृषिनायका हि मे ॥४४॥

शून्याष्टाष्टद्वयकोटयः(२८८०) संख्या संमुनिनोदितः ।
नन्दत्वेषावनौ ग्रन्थो यावत् कालं तमेव हि ॥४५॥

इति प्रश्नोत्तरोपासकाचारे भट्टारकश्रीसकलकीर्त्तिविरचिते अनुमत्यादिप्रति-माद्वयप्ररूपको नाम चतुर्विंशतितमो परिच्छेदः ॥

(अन्यदीयहस्तेनोल्लेखः—)

संवत् १६५७ वर्षे माहमासे शुक्लपक्षे द्वितीयायां रविवासरे शतभिषानाम-नक्षत्रे श्रीमूलसंघे नंद्याम्नाये बलात्कारगणे सरस्वतीगच्छे भ०श्रीकुन्दकुन्दाचार्या-न्वये भट्टारकश्रीपद्मनन्दिदेवास्तत्पट्टे भ०श्रीशुभचन्द्रदेवास्तत्पट्टे श्रीजिनचन्द्रदेवा-स्तत्पट्टे भ०श्रीप्रभाचन्द्रदेवास्तत्पट्टे भ०श्रीचन्द्रकीर्त्तिदेवास्तदाम्नाये खण्डेलवाला-न्वये गोधागोत्रे अम्बावतीवास्तव्ये सा०पदाइण भा०पाटमदे तत्पुत्रौ द्वौ प्र० सा०नूना द्वि० सा०पूना । सा० नूना-भार्या जीवणि तत्पुत्रा-श्चत्वारः । प्र० सा०वीरू-भार्या लहौकन । द्वि० पुत्र सा०जिनदास-तद्भार्ये

द्वे प्र०स्वरूपदे, द्वि० ल्होडी। तत्पुत्रसा०१सांगा-तद्भार्यासिंगारदे। तृती० सं० श्रीविमल । भा०संघविणिबहुरंगदे। तत्पुत्रात्रयः—प्र०सं०जीवा, द्वि०सं०खीडा, तृतीयसं०केशो । सं०जीवाभार्ये द्वे-प्र०प्रतापदे, द्वि०कुसुमदे । तत्पुत्रसा०दुर्गा, तत्भार्या दुर्गादे । सा०खीडाभार्ये द्वे-प्रथमसुहागदे द्वि०सिंगारदे। तत्पुत्रौ द्वौ प्र०रायमल भा०रयणादे। द्वि०साहिमल। तृ०केशो भा०कस्मीरदे। तयोः पुत्रौ द्वौ प्र० दमोदर द्वि०सुन्दर। तस्य चतुर्थसं०चतुर्भुज भार्ये द्वे प्र०चांदणदे द्वि० चतुरंगदे। तत्पुत्रौ द्वौ प्र०सा०कौजू भार्ये कौत्तिगदे द्वि०तत्पुत्रसा०नरहरिदास भा०नारिंगदे। द्वि०देवसी द्वि०विसलहदी। द्वि०सा०पूना-भार्याइहहा, तत्पुत्रौ द्वौ प्र०सा० मलिदास, द्वि०सा०कचरू। मल्हभार्यामहिमादे तत्पुत्राश्चत्वारः-प्र०सा० जाद भा०जसमादे, तस्य पुत्रौ द्वौ०प्र०नरायण द्वि०नेमिदास द्वि०नेतसीभार्ये द्वे० प्र०नेतलदे, द्वि०ल्होडी, तृ०जिनदत्तभार्याजौणादे। प्र०वि०तेजसी द्वि०सा० कचरूभार्ये द्वे कौत्तिगदे द्वि०कौडिमदे-एतेषां मध्ये चतुर्भिर्वधूभिरिदं श्रावका-ध्ययनशास्त्रं कल्याणाय व्रतोद्यापनार्थं घटापितं उत्तमपात्राय दत्तम्। शुभं भूयात्॥

[ 3419 ] अन्तः— अथ ग्रन्थकृत्प्रशस्तिः—

श्रीवर्द्धमान इति चान्द्रकुलाम्बरार्कस्तस्माज्जिनेश्वरगणाधिप एव जज्ञे ।
रंगाङ्गवांगविवृतिप्रथनप्रसिद्धमाहात्म्यभूरभयदेवगुरुस्ततश्च ॥१॥

सूरिर्बभूव जिनवल्लभनामधेयस्तत्पादपद्ममधुकृज्जिनशेखरराज्ञः ।
पद्मेन्दुरिन्दुनिभकीर्त्तिभरो बभूव सूरिस्ततो यतिपतिर्विजयेन्दुनामा ॥२॥

तस्माद् बभूवाभयदेवसूरिर्विध्वस्तविस्तारिकुवादिगर्वः ।
श्रीदेवभद्रोथ कृतोरुभद्रस्ततः प्रभानन्दमुनीश्वरश्च ॥३॥

श्रीचन्द्रसूरिः सुगुरुस्तदीयपट्टावतंसप्रतिमोधुनास्ति ।
अस्य द्वितीयस्तु धियाऽद्वितीयो जज्ञे मुनीन्द्रो विमलेन्दुनामा ॥४॥

आचार्यधुर्यत्वमवापिताः श्रीश्रीचन्द्रसूरिप्रवरास्त्रयोमी ।
श्रीचारुचन्द्रो जिनभद्रसूरिर्गुणाम्बुधिः श्रीगुणशेखरश्च ॥५॥

एतैरेव वितीर्णोपाध्यायपदो मुनीश्वरोत्तंसैः ।
श्रीदेवभद्रयतिपतिशिष्यः श्रीश्रीतिलकनामा ॥६॥

गौतमपृच्छाप्रकरणविवरणमिदमल्पबुद्धिविभवोपि ।
भव्यजनोप्युपकृते कृतवानभ्यर्थितः कृतिभिः ॥७॥

छंदो-लक्षणमुख्यैर्दोषैर्यद् दुष्टमस्ति कमपीह ।
तदखिलमपि मदनुग्रहबुद्धया शोध्यं सुधीमद्भिः ॥८॥

गगनतले परिखेलति यावज्ज्योतिष्कचक्रमखिलमपि ।
नन्द्याद् गौतमपृच्छाप्रकरणविवरणमिदं तावत् ॥९॥

कल्याणाचलभूविकासिसुमनःश्रेण्याभितः संश्रितः
सेव्यः सर्वसुपर्वभिः स्फुटतमोत्कत्यः प्रसत्यद्भुतः ।
सच्छायाचयचारुरुच्यदसमप्रेखत्फलर्द्धि पदः
मन्थाद् वस्तदनल्पकल्पितमहः श्रीसंघकल्पद्रुमः ॥१०॥

इति श्रीगौतमपृच्छाप्रकरणविवरणं संपूर्णमिति शुभम् ।
संवत् १६२० वर्षे कार्तिकशुदि १३ दिने लेखि ॥ ग्रन्थाग्रम् ६००० ॥

[ 3421 ] **वृ०आदिः—** वीरजिनं प्रणम्यादौ बालानां सुखबोधिका ।
श्रीमद्गौतमपृच्छायाः क्रियते वृत्तिम(र)द्भुता ॥१॥

**वृ०अन्तः—** अतः भव्यलोकैरियं गौतमपृच्छा पठनीया श्रोतव्या । एवम्—

श्रीजिनहर्षसूरीणां सुशिष्याः पाठका वराः ।
श्रीमत्सुमतिहंसाश्च तत्शिष्यैर्मतिवर्द्धनैः ॥१॥

पाठकपदसंयुक्तैः कृता चेयं कथानिका ।
श्रीमद्गौतमपृच्छायाः सुगमा सुखबोधिका ॥२॥

सिद्धौ राम-मुनौ चन्द्रे(१७३८)वर्षेस्मिन् मार्गशीर्षके ।
श्रीमत्यां जगत्तारण्यां नगर्यां च शुभे दिने ॥३॥

इति श्रीगौतमपृच्छायाः सुगमा वृत्तिः संपूर्णा । ग्रन्थाग्रम् १६८३ ॥

[ 3424 ] **आदिः—** नत्वा वीर जिनं देवं बालावबोधो लिख्यते ।
श्रीगौतमपृच्छाया वाचनाथ विशेषतः ॥१॥

श्रीसोमसुन्दर-श्रीमुनिसुन्दर-महिशालराजेन्द्रा- ।
श्रीसोमदेवगुरवो जयन्त्यमी कल्पवृक्षसमाः ॥२॥

**अन्तः—** श्रीसोमसुन्दराचार्य-मुनिसुन्दरवाक्सुधाम् ।
पीत्वा विशालराजेन्द्रः सुधाभूषणसेविना ॥

श्रीगौतमपृच्छाया वार्त्तार्थाय सुबोधतः लिखितः ।
जयसुन्दरेण वाचकवरेण्यश्रीसंघभक्तेन ॥२॥

इति श्रीगौतमपृच्छाबालावबोधः संपूर्णः समाप्तः ॥
संवत् १८२२ रा मीती मगसर वद ६ वार सोम ॥
लिषत मथेन सरूपचन्द मेडतानगरे ॥

(पश्चात्कालीनोल्लेखः—)

साधविजी हस्तिश्रीजी प० ।

[ 3430 ] **अन्तः—** इति श्रीगौतमपृच्छाबालावबोधः समाप्तः ॥

संवत् १५६९ वर्षे महामासे १३ सोमवासरे ॥ तपागच्छाधिराज-परमगुरुश्रीहेमविमलसूरिविजयराज्ये पूज्याराध्ये पं०श्रीमाणिक्यचारित्रगणि-शिष्यविवेकचारित्रेण लखितः ॥ श्राविकाचन्द्राउलिपठनार्थम ॥

[3437] अन्तः— इति श्रीप्रश्नबोलचाल संपूर्ण ।

संवत् १८८० नां चैत्र वीद १२ सोमः मां श्री ५ धनजी वीरधनथुए साधुश्री५ भगवांनजी सांमीने बोलनी परत वोरावी छे ।

संवत् १८८१ नां चैत्र वद २ दीने धरमनी मने छइ सामाली छे ॥

[3442] अन्तः— इति स्याद्वादमंजरीवृत्तिः समाप्ता ॥

संवत् १५५६ वर्षे ज्येष्ठसुदि चतुर्थीदिने शनौ वारे लिखितं श्रीवीका-नगरे श्रीखरतरगच्छाधिराजश्रीजिनसमुद्रसूरि—पट्टालंकारयुगप्रधानावतार—श्रीजिन-हंससूरिविज[य]माने वाचनाचार्यवर्यश्रीशुभदत्तगणीनां शिष्यवाचनाचार्यहर्षमदिर-गणीनां शिष्यपण्डितप्रकांडराजधर्ममुनिना योग्यम् ।

[3443] अन्तः— इति श्रीस्याद्वादमंजरीग्रन्थः समाप्तः ॥

श्रीमद्विक्रमात् गज-नयन—मुनींदु(१७२८)वर्षे ऊर्जार्जुनैकादश्यामिति गुरौ श्रीरस्तु ।

(श्वेतरङ्गेन प्रभ्रष्टान्यक्षराण्यपि वाच्यन्ते–)

श्रीभाग्यसौभाग्य०-शिष्यग० विनयसौभाग्येनालेखि श्रीनागोलानगरमध्ये। सुखसाहाज्यं(ज्ये)न पूर्णीजातमिति भद्रम् ।

[3445] आदिः— ननु प्रमाणशास्त्रे भवतां वैदुष्यमाकर्ण्यते। तदेतत् किं कुत्र सौगत-सांख्य-कणादाक्षपाद-प्राभाकर-जैन-जैमिन्यादिमतानामन्विष्यते इति प्रतिपादयन्तु भवन्तः। भट्टा वयमिति चेत्, तत्रापि किं प्राभाकरा जैमनीया वेदांतवादिनो वा ?। अथ भवतु नाम यत्र कुत्रचित्प्रागल्भ्यममीषां मध्ये किन्तु सर्वेप्यमी मीमांसकास्तैस्तु तत्त्वं मीमांस्यते तदत्र किं तत्त्वं तदेवोच्यतां, यतस्तत्परिज्ञानाभावान्न तदाश्रिता मीमांसा प्रमाणकोटिकुटीरकमटाटयते(?मवाप्यते) ।

अन्तः— इदानीमपशब्दग्रहं परित्यज्य स(श)ब्दरत्ने मदुक्तिब्रह्मानन्द इव किमिति मनः क्षणमपि न निक्षिप्यते शब्दाद्वैतसाम्राज्यं विहायाऽपशब्दकदन्नभिक्षाटन कुरुथ। इदानीमपि मात्सर्यमुत्साय मदुक्तशब्दरत्नेन चतुर्मुखकण्ठसहकारवनोनर्तकि-(की)भारति(ती)कलाकोकिलाकण्ठकण्ठालंकरणं भवान् करोतु ॥

इत्यपशब्दखण्डनं समाप्तम् ॥

[3457] आदिः— ननु भोः प्राज्ञ ! पांशुक्रीडाः यूयमत्र कुतः स्थानात् समायाताः, को नाम, को ग्रामः किं वा युष्माकमभिधानं किं वा युष्माकमायुष्मतां निवासस्थानं किं वा कार्यं पदे येन शुभवतां भवतामत्र समागमो जातः आस्थीयतामत्र किंचित् कालं विद्वद्गोष्ठीसुखमनुभवामः ।

अन्तः— इत्याद्युक्तसुयुक्तियुक्तेषु केषु केषु सुग्रन्थग्रन्थेषु सातिशयः परिचयो भवतां पोस्फुरीतितरामित्यावेदयती(ते) मुनिध्यानवर्द्धनपठनकृते ॥

संवत् १९५१ नी मीति आसोज वदी १३ ॥

[ 3463 ] अन्तः— इति श्रीज्ञानबिन्दुप्रकरणम् ।

संवत् युग-रस-शैल-शशि( १७६४ )वत्सरे शाकेऽङ्क-नेत्र-रस-चन्द्र-(१६२९)प्रवर्त्तमाने फाल्गुनमासे कृष्णपक्षे दशमीतिथौ भृगुवासरे संपूर्ण(र्णी)कृतम् ।

[ 3473 ] बा०आदिः—ऐन्द्रवज्ज्योतिरानन्ददायिनी श्रुतदेवता ।
सर्वात्मचेतसि स्वैरं भावान् प्रोद्भावयत्विह ॥१॥

आचार्यसिद्धसेनैर्व्याख्यातं सूत्रमत्र यत् पूर्वम् ।
तदहं विवृणोमि मुदा बोधार्थं भव्यजीवानाम् ॥२॥

ग्रन्थना आरंभमइ विषइ उमास्वातिनामा आचार्य प्रथम मंगल आचरई छइ । मोक्षना मार्गनो देखाडनार कर्मरूप जे पर्वत तेहनउ भेदनहार विश्व-तत्त्व कहतां जगना भाव तेहनउ आणणहार । एहवा सर्वज्ञ प्रतइं हुं वादउं ।

बा०अन्तः— इति श्वेतांबराचार्यश्रीउमास्वातिगणिकृत-तत्त्वार्थसूत्रं तस्य बालावबोधः श्रीयशोविजयगणिकृतः समाप्तः ॥

संवत् १७६१ अश्विनि वद द्वि[ती]या भौमे श्रीपूर्णिमापक्षे भट्टारक-श्री ५ श्रीमहिमाप्रभसूरीश्वर-चरणसेवकमुनिसहजरत्नशिशुना लिवी( पी )कृतमिदं पुस्तकम्, वाच्यमानश्चि(नं चि)रं नयात् श्रीपार्श्वः सुखायास्तु ।

[ 3477 ] मू० आदिः— सिरिवीरजिणं वन्दिय धम्मगुरुं तत्तबोहगं धीरं ।
देवाइदेवतत्तं सुआनुसारे निरूवेमि ॥१॥

मू० अन्तः— तवगणगयणदिवायर विजयाइमाणसूरिरज्जंमि ।
नाणविजयबुह-सेवगवायगलावण्णविजयेण ॥७०॥

गन्थन्तरगाहाहिं समत्थिया वुच्चसित्तरी एसा ।
भवियजणबोहणत्थं मंगलमालं कुणउ निच्चं ॥७१॥

इति श्रीवुच्चसित्तरी(सप्तति)सूत्रं समाप्तम् ॥

सम(संव)त् १९५३ का फागुणसुद ॥११॥

वृ०आदिः - इह ग्रन्थारम्भे ग्रन्थकृत् शिष्टसमयपरिपालनाय विघ्नोपशांतये श्रोतृप्रवृत्तये च मंगलादिकं प्रतीजानीते सिरिवीर त्ति ।

वृ०अन्तः— अथ कविः स्वाभिनिवेशं निरासयन्नाह तहविहभविबोहे त्ति व्याख्या सुगमा ॥७०॥

अथ ग्रन्थसमाप्तिं निगमयन्नन्ते मंगलं दर्शयति-तवगणेति व्याख्या सुगमा ॥७१॥

इति श्रीद्रव्यसप्तनिकावृत्तिः समाप्ता ॥

वेद-वेदर्षि-चन्द्राब्दे(१७४४)ईषस्य सितपक्षतौ ।
विवव्रे तत्र वृत्तिश्च लावण्याह्वयवाचकैः ॥१॥

यावन्मही मृगाक्षीयं धत्ते वारिधिमेखलाम् ।
वाच्यमाना बुधैर्जीयात् सवृत्तिर्द्रव्यसप्ततिः ॥२॥

तर्कादिशास्त्रनिपुणैर्वैराग्य[ा]मृतसागरैः ।
शोधितेयं श्रिये श्रीमद्विद्याविजयकोविदैः ॥३॥

लौ० प्रौयत् कीमनदास आहपुरमध्ये ग्रन्था० १३०० ॥

[3480] **आदिः**— प्रणिधाय परं रूपं राज्ये श्रीविजयदेवसूरीणाम् ।
नयचक्रस्यादर्शप्रायो विरलस्य वितनोमि ॥१॥

**अन्तः**— इति श्रीमल्लवादिक्षमाश्रमणपादकृतनयचक्रस्य[ा]नुबन्धः समाप्तः, इति ग्रन्थमानसंख्या १८००० ॥

महोपाध्यायश्रीजश(यशो)विजयगणिना कृतो ग्रन्थः नयचक्रशास्त्रं संपूर्णम् ॥

लौ० प्रोगेयत अमरचन्द जीवदासजीका पुत्र रेवासी नागोरका पुष्करणा ब्राह्मण ।

संवत् १९६७ रा मिति फागण बद २ अइपुरमध्ये । नागोररा रेवासी मारवाडी ।

[3494] **अन्तः**— इति श्रीन्यायावतारविवृतिः समाप्ता ॥
कृतिरिय[मा]चार्यसिद्धव्याख्यानिकस्य । ग्रन्थाग्रम् २०७३ ॥

संवत् १४५३ वर्षे फाल्गुनसुदिपूर्णिमादिने अद्येह श्रीमत्पत्तने श्रीराउत-वाटके श्रीसाधुपूर्णिमापक्षीयभट्टारकश्रीअभयचन्द्रसूरि-शिष्यरामचन्द्रसूरिपठनार्थं ज्ञा(न्या)यावतारवृत्तिप्रकरण लल(ललित)कीर्त्तिमुनिना लिखितं शुभं भवतु ।

[3503] **अन्तः**— इति ब्रह्मचर्याष्टकं संपूर्णम । इति श्रीपद्मनन्दिकुन्दकुन्दाचार्यविरचितं पद्म-नन्दिग्रन्थः समाप्तः । संवत् १७३४ वर्षे भाद्रवा वदि १ दिने ।

[3505] **आदिः**— न तु प्रमाणशास्त्रे भवता वैदुष्यामाकर्ण्यते तदेतत् किं क्व(कु)त्र सौगत-सांख्य-कणभिक्षा-ऽक्षपाद-प्रभाकर-जैन-जैम(मि)न्यादिमतानां मध्ये व्यव-ह्रियते इति ।

**अन्तः**— इत्यन्नाप्युक्तं समंतभद्राचार्यैः ।

कालः कविर्वा कलुषाशयो वा
श्रोतुः प्रवक्तुर्वचमानयो वा ।
तच्छासनैकाधिपतित्वलक्ष्मी-
प्रभुत्वशक्तेरपवादहेतुः ॥

इत्याचार्य श्रीनरेन्द्रसेनरचिता प्रमाणप्रमेयकलिका परिसमाप्ता ॥

[3508] अन्तः— इति सिद्धः षट्दर्शनसमुच्चयतात्पर्यार्थः ।
श्रीमुनीश्वरसूरीन्द्रैः प्रोक्तस्तार्किकपर्षदि ।
मुनिहर्षमुनेरेष हस्तबाणः प्रमा[पि]तः ॥
इति प्रमाणसारे प्रस्तावागतदर्शनव्यवस्थास्वरूपप्ररूपकस्तृतीयः परिच्छेदः ॥
श्रीबृहद्गच्छालङ्कारसारवादीन्द्रचूडामणिकविसार्वभौमभट्टारकश्रीश्रीमुनीश्वरसूरिविरचितः प्रमाणसारग्रंथः संपूर्णः ॥ तत्त्वानां पंचविंशं कलयति कपिलः० ।
पुस्तिका लिखिता मुनिचन्द्रर्षेण(र्षिणा) आत्मार्थे ।

[3517] आदिः— श्रीजिनं हर्षतो नत्वा वीरं विश्वातिशायिनम् ।
हेतुखण्डनपांडित्यतांडवं मंडयते मया ॥१॥
अस्य व्याख्या–मया हेतुखण्डनपांडित्यतांडवं मण्डयते ।

अन्तः— श्रीमत्तपोगणनभोंगणभासनैकभानूपमाः परमतापिमहःसमूहाः ।
शश्वन्नभोगरुचयः शुचयस्तपोभिः श्रीसोमसुन्दरगुरुप्रवरा बभूवुः ॥३०॥

तेषां संततिगणपतिलक्ष्मीलीलाविलासगोविन्दाः ।
श्रीमल्लक्ष्मीसागरगुरवो गोपीवरा रेजुः ॥३१॥

यत् कृष्णवर्त्माव्यभिचारिधूमानुमानसम्यग् समुदीरितं तत् ।
अकृष्णवर्त्मापि विशिष्टधूमोऽज्ज्वलच्छविर्यद् यशसां समूहः ॥३२॥

तत्पट्टोदयभूधरमहस्करसोदरा युगप्रवराः ।
श्रीसुमतिसाधुसूरीश्वरा जयन्त्यसमतममहसः ॥३३॥

हृत्कुण्डान्तरमण्डितोज्ज्वलतरध्यानाग्निना यैः स्फुरत्–
कामश्यामतनुर्व्यधायि सहसा नष्टोवदुष्टोसकौ ।
तापाक्रांततनुः सुधामयतनुं शिश्राय शीतद्युतिं
तस्मिन् श्यामललाञ्छनच्छविमिषादद्याप्ययं वीक्ष्यते ॥३४॥

तेषां श्रीगणराज्ये विद्यागुणगौतमानुकारकृताम् ।
श्रीजिनहर्षगुरूणां शिष्यशिशुः साधुविजययतिः ॥३५॥

प्राथमिकप्रामाणिकपठनायालीलिखद् यथावगमम् ।
प्रकरणमिदं सुधीभिः संशोध्यं मयि कृपां कृत्वा ॥३६॥ युग्मम् ॥

यः पठति वादिविजयप्रकरणमिदमादितोपि कौतुकतः ।
अहमहमिकया मोदात् वृणुते तं साधुविजयश्रीः ॥३७॥
इति वादिविजयप्रकरणं समाप्तम् ॥

[3521] अन्तः— अतो वृषभवर्द्धमानादय एव विश्ववेदिनः सिद्धा इति ॥
इति सर्वज्ञसिद्धिप्रकरणं समाप्तम् ॥छ॥

युगेषु-नन्द-क्षशभृत्परिवत्सरेयं(१९५२)मासे सहे सितदले दिवसे पवित्रे ।
कष्टेन ऋद्धिकरणेन मयाप्यलेखि श्रीनागपत्तन[पु]रे भगवत्प्रसादात्॥१॥

[ 3524 ] **अन्तः**— श्रीसूरीश्वरसोमसुन्दरगुरोर्वीक्षक्षमामण्डल—
ख्यातश्रीशशिगच्छदुग्धजलधिस्फूर्जत्सुधारोचिषः ।
श्रीमद्वाचकनायकः प्रतिमतध्वांतार्यमार्योदयः
शिष्यः श्रीजिनमण्डनोऽस्य तनुते हेतोरिदं खण्डनम् ॥१॥

इति हेतुविडम्बनस्थलः कृतः श्रीजिनमण्डनग० ।

[ 3527 ] **अन्तः**— ब्रह्मदेववृत्तिः समाप्ता । ग्रन्थसंख्या शत २७०० ।

स्वस्तिश्रीसंवत् १४८५ वर्षे श्रावणसुदि १३ शनौ दिने मेवावरस्थाने राइश्रीचांदरायराज्यप्रवर्त्तमाने श्रीकाष्ठासंघे मथुरान्वये पुष्करगणे आचार्यश्री-सहस्रकीर्त्तिदेवास्तत्पट्टे भट्टारकश्रीगुणकीर्त्तिदेवास्तच्छिष्यभट्टारकश्रीयशःकीर्त्तिदेवा हरिभूषणदेवा ज्ञानचन्द्रदेवास्तेषामाम्नाये अग्रोतकान्वये गर्गगोत्रीयपरम-श्रावक-साधुधीतू-तद्भार्यासाध्वीथिरो(रा)पुत्राश्चत्वारः-साधुहीगा-महणा-सहणपाल पल्हासा। हीगा—भार्यासाध्वी सर्वगुणशालिनी दानपूजापरायणी साध्वीपल्होतया पुत्रगोल्हे द्वितीयनाममकुटवर्द्धन एतेषां मध्ये नसीरवादीया सा०वच्छराज—पुत्री हीगाभार्या साध्वीपल्होतया निजज्ञानावरणीकर्मक्षयार्थं केवलज्ञानोत्पत्तये इदं द्रव्यसंग्रह—ब्रह्मदेववृत्तिशास्त्रं लिखापितं घनाकायस्थेन लिखितम् ॥

ज्ञानवान् ज्ञानदानेन निर्भयोऽभयदानतः ।
अन्नदानात् सुखी नित्यं निर्व्याधी(धिः) भेषजाद् भवेत् ॥

वर्धतां जिनशासनम् ॥

[ 3531 ] **अन्तः**— इति श्रीद्रव्यसंग्रहे तृतीयोधिकारः संपूर्णः ॥
संवदग्नि—रसात्यष्टि(१७६३)मासे माहसुसंज्ञके लिखितम् ।

**स्त०आदिः**— श्रीमज्जिनेन्द्रदेवानां पादानानम्य भक्तितः ।
द्रव्यसंग्रहस्य [ सम्यग् ]बालबोधो विधीयते ॥१॥

**स्त०अन्तः**— द्रव्यसंग्रहशास्त्रस्य बालबोधो यथामति ।
हंसराजेन मुनिना परोपकृतये कृतः ॥१॥

पौर्वापर्यविरुद्धं यल्लिखितं मयका भवेत् ।
विशोध्यं धीमता सर्वं तदाधाय कृपां मयि ॥२॥

खरतरगच्छनभोगणतरणीनां वर्द्धमानसूरीणाम् ।
राज्ये विजयिनि निष्ठां नीतोयं सहसि मासके ॥३॥

इति द्रव्यसंग्रहटबार्थः संपूर्णमजनि ॥

[ 3547 ] **अन्तः**— संवद्वसु-गज-रस-शशि(१६८८)मिते च दुभिक्षकात्तिके मासे ।
अमदावादे नगरे पटेलह्वाजाभिधप्रोल्याम् ॥१॥

बृद्धोपाश्रयमध्ये चांद्रकुले बृहत्खरतरे गच्छे ।
श्रीजिनसागरसूरेर्विजयिनि राज्ये सुसाम्राज्ये ॥२॥

नवतत्त्वसूत्रवृत्तिर्विहिता श्रीसमयसुन्दरैः सुगमा ।
मुनिसहजविमल-पंडितमेघविजयनामशिष्यकृते ॥३॥

वृत्ति लिखित्वा मात्सर्यात् प्रशस्तिं न लिखिष्यति ।
जिनाज्ञालोपकृत् पापी नरके स पतिष्यति ॥४॥

इति श्रीसमयसुन्दरोपाध्यायकृतं नवतत्त्वशब्दार्थव्याख्यानं संपूर्णम् ॥

[ 3556 ] **आदिः**— श्रीवीरं तीर्थपतिं सूरिश्रीसोमसुन्दरगुरूंश्च ।
श्रीमत्तपोगणेशान् प्रणम्य विवृणोमि तत्त्वानि ॥१॥

अपि च—

श्रीवीरक्रमकमलं नत्वा नवतत्त्वसूत्रविवृतिमहम् ।
पा(प्रा)कृतवचनैर्जनतोपयोगिभिर्मुग्धकलैः कुर्वे ॥२॥

**अन्त.**— तपागणे श्रीगुरुसोमसुन्दरक्रमाब्जभृङ्गो गणिहर्षवर्द्धनः ।
विचारसिंधौ नवतत्त्वसूत्रे बालावबोधं रचयांचकार ॥१॥

उत्सूत्रमत्रालिखमस्मि किंचित् राभस्यतो वा धिषणाविमोहात् ।
संशोधनीयः करुणां विधाय शुद्धाशयैस्तद्‌विबुधैः प्रसद्य ॥२॥

इति नव[त]त्त्वबालावबोधः समाप्तः ॥

श्रीचन्द्रगच्छमंडनबृहत्तपागणालंकारश्रीदेवसुन्दरसूरि-पट्टालंकरणयुगोत्तम भट्टारकप्रभुगच्छाधिराजश्रीसोमसुन्दर-शिष्यहर्षवर्द्धनगणिकृतः ॥

नवतत्त्वस्य सद्वार्त्ता सार्द्धसप्तदशीमिता ।
कृता बालावबोधार्थं हर्षवर्द्धनसाधुना ॥१॥

ग्रन्थाग्रसंख्या १७५० ॥

इति नवतत्त्वबालावबोधः संपूर्णः ॥

[ 3567 ] **मू० अन्तः**—इति श्रीनवतत्त्वप्रकरणं समाप्तम् ॥

पंडितशिरोमणिपंडितश्री५श्रीहर्षसागरगणि-तत्शिष्यशांतिसागरलिखितं अजयपुरमध्ये शुभं भवतु कल्याणं दिने दिने । संवत् १६९७ वर्षे मुनिमेघसागरपठनार्थम् ।

**बा० अन्तः**— संगच्छाधिराजभट्टारकप्रभुश्री५श्रीहीरविजयसूरीश्वर-तत्शिष्यपंडितशिरोमणिपंडितचक्रवर्त्तिपंडि[त]श्री५श्रीविजयचन्द्रगणि-तत्शिष्यपंडितश्रीविजयहर्षगणि-तत्शिष्यगणिवर्द्धमानविजयलिपिकृतं गणिश्रीनयाणंदपठनार्थं श्रीसुरतांणपुरमध्ये लिखितम् ॥

[3576] अन्तः— आ प्रत लल्लुभाई करमचन्दे पोताना छापखानामां छापी प्रगट करी। ठेकाणु अमदावादमां काळुपुरमां राजामेहतानी पोलमां तोडानी पोलमां छे।

संवत् १९१६ नवतत्त्वनी ॥

[3579] अन्तः— एतलें नवतत्त्वनो वार्त्तारूप बालावबोध संपूर्णः ॥
चतुर पुरस हुवे ते इणनें पढें।

संवत् १८३९ वर्षे महामांगल्यप्रदमासोत्तममासे आसाढमासे शुक्लपक्षे शनीवारे तृतीयातिथौ श्रीकोटानगरे सकलपंडिताधिराजउपाध्यायश्रीलावण्यविजयजी त(त्)शिष्यपं०श्रीलक्ष्मीविजयजी त(त्)शिष्यपं० लाभविजयजो त(त्)शिष्यप० विवेकविजय टबार्थलिपिकृतं पं०खुसालविजय स्वआत्मार्थवाचनाय पठनार्थम् ॥

[3584] स्त० अन्तः—संवत् १७५३ वर्षे आश्विनि सितपूर्णिमातिथौ बुधवासरे लिखितः पं०रत्नविजयेन स्ववाचनाय चेलाभर्जसिंघसाह्ये(हाय्ये)न ।

संजम-भू-अर्चन(१७१३)वत्सरे आसोसुद्धस्स पमरसीदिवसे ।
नवतत्त्वसुत्तअत्थं लिहियं रयणेण नियहेउ ॥१॥

लिखितं सिंघासुआग्रामे ।

[3587] स्त० आदिः—नत्वा विश्वेश्वर पार्श्वं शंखपूर्भूमिमण्डनम् ।
लिख्यते नवतत्त्वस्य टबार्थो लेशतः शुभः ॥१॥

स्त० अन्तः—समस्तशास्त्राम्बुधिपारदर्शिनोऽभूवन्महापंडितपद्मसागराः ।
तेषां सुशिष्याः कुशलादिसागरा निःशेषसस्ताठ(संस्थापकमौ)लिमौलयः ॥१॥

तःछि(तच्छि)ष्याणां महाभाग(ग्य)वतां पंडितभूभुजाम् ।
श्रीमदुत्तमवार्द्धीनां पदांभोजप्रसादतः ॥२॥

यशःशुभ्रकृतभ्वासकोविदाः पद्मसागराः ।,
तच्छिष्याः समजायंत गणयः प्रेमसागराः ॥३॥

तत्शिष्याणां सुचारित्रसागराणां शिशुर्व्यधात् ।
केसराब्धिः स्वल्पमतो(ति)र्नवतत्त्वटबार्थकम् ॥४॥

इति(ती)द जयशेखरसुरीश्वरपादैर्विरचितं नवतत्त्वप्रकरणं संपूर्णम् ।

सकलपंडितशिरोमणिपं०श्रीगुणविजय-तत्शिष्य-पं०श्री-विनीतविजयगणि-तत्शिष्यमुनिः गंगविज[यः] ॥

॥ संवत् १८०० वर्षे फाल्गुणसुदि ६ । हेसुरीनगरे ॥

[3593] अन्तः— संवत् १९३३ ना शाके १७९९ प्रवर्त्तमाने मासोत्त[म]मासे चैत्रमासे शुभे शुक्लपक्षे चतुर्दशीतिथौ शनिवासरे लिपीकृतं ब्राह्मणश्रीमालीज्ञातीआवस्ति-परमानंद अमदावादमध्ये लिपीकृता सम्मतिटीका संपूर्णा ॥

[ 3597 ] अन्तः— इति श्रीस्याद्वादचूलिका संपूर्णा ।

इति श्रीअमृतचन्द्राचार्यविरचितं समयसारनाटकं संपूर्णम् ।

अथ प्रशस्तिः—

वस्वष्टयुक्तसप्तेंदुयुते वर्षे मनोहरे ।
शुक्ले भाद्रपदे मासे चतुर्दश्यां शुभे तिथौ ॥ १ ॥

ईसरदेति सद्ग्रामे टीकेयं पूर्णतामिता ।
भट्टारकजगत्कीर्तिपट्टे देवेन्द्रकीर्तिना ॥ २ ॥

दुःकर्महानये शिष्यमनोहरगिरा कृता ।
टीका समयसारस्य सुगमा तत्त्वबोधिनी ॥ ३ ॥ युग्मम् ॥

बुद्धिमद्भिः बुधैः हास्यं कर्त्तव्यं नो विवेकिभिः ।
शोधनीयं प्रयत्नेन यतो विस्तरतां व्रजेत् ॥ ४ ॥

बुधैः संपाठ्यमानं च वाच्यमानं शुभं सदा ।
शास्त्रमेतच्छुभंकारि चिरं संतिष्ठतां भुवि ॥ ५ ॥
पूज्यदेवेन्द्रकीर्त्तिः सुशिष्येण स्वांतहारिणा ।
नाम्नेयं लिखिता टीका स्वहस्तेन स्वबुद्धये ॥ ६ ॥

संवत्सरे वसु-नाग-मुनीन्दुमिते १७८८ भाद्रपदमासे शुक्लपक्षे चतुर्दसी(शी)तिथौ ईसरदानगरे राजेश्रीअजितसिंहजीराज्ये प्रवर्त्तमाने श्रीचन्द्र[प्र]भच्यैता-(चैत्या)लये श्रीमूलसंघे अन्याम्नाये बलात्कारगणे सरस्वतीगच्छे श्रीकुंदकुन्दाचार्यान्वये अम्बावत्याः भट्टारकजीच्छ्री सुरेन्द्रकीत्तिस्तत्पट्टे भट्टारकजिच्छ्रीजगत्कीर्तिजित्-तत्पट्टाख्यस्वगं(गां)भीर्यक्षमागुणनिर्जितसागरे लादिपदार्थाः स्वपंक्तिरीतरितागमांभोधिः भट्टारकशिरोमणिः भट्टारकजिच्छ्रीमद्देवेन्द्रकीर्त्तिस्तेनेयं समयसारटीका स्वशिष्यमनोहरकथनाद्वा पठनाय तत्त्वो(त्त्व)बोधिनी सुगमा निजबुद्धया पूर्वटीकामवलोक्य विहिता बुद्धिमद्भिः शोधि(ध)नीया। प्रमादाद्वा अल्पबुद्धया यत्र हीनाधिकं भवेत् तच्छोधनीयं यावतेयं कृता मया किं बहुकथनेन वाचकानां पाठकानां मंगलावली संभवितु श्रीजिनप्र(स)त्प्रसत्तेः ॥

संवत् १९०१४(१९१४) का मिति आसाढसुदि ३ दिने लिपिकृतं हीरविजयेन बालोचरमध्ये भागीरथ(थी)तटे संभवनाथजीप्रसादात् वाचनार्थ वीरचन्दजी शुभम् । ३००० ॥ श्री ॥

[ 3605 ] अन्तः— इति श्रीकुलमंडण(न)सूरिविरचिता कायस्थितिः समाप्ता ॥

अब्ज-बाण-निधीन्दुब्दे(१९५१) सप्तम्यां रविवासरे ।
स्वार्थंसुजैऽसिते पक्षेलेखि चतुर्भिक्षुना ॥ १ ॥

[ 3623 ] वृ० आदिः—नेमिचन्द्रं जिनं नत्वा सिद्धं श्रीज्ञानभूषणम् ।
वृत्ति गोमटसारस्य कुर्वे कर्णाटवृत्तितः ॥ १ ॥

श्रीमदप्रतिहतप्रभावस्याद्वादशासनगुहाभ्यन्तरनिवासिप्रवादिसिंधुरसिंहाय-मानसिंहनंदिमुनीन्द्राभिनंदितगंगवंशललामराजसर्वज्ञाद्यनेकगुणनामधेयभागधेयश्रीमद्राजमल्लदेवमहीधरवल्लभमहामात्यपदवीराजमानरणरंगमल्लासहायपराक्रमगुणरत्नभूषणसम्यक्त्वरत्ननिलयादिविविधगुणनामसमासादितकीर्तिकान्तश्रीमच्चामुंडरायप्रश्नावतीर्णैकचत्वारिंशत्पदनामसत्त्वप्ररूपणद्वारेणाशेषविनेयजननिकुरम्बसंबोधनार्थं श्रीमन्नेमिचंद्रसैद्धान्तचक्रवर्तिसमस्तसैद्धान्तिकजनप्रख्यातविशदयशोविशालमतिरसौ भगवान् शास्त्रकारो महाकर्म्मप्रकृतिप्राभृतप्रथमसिद्धांत[व]ज्जीवस्थान-क्षुद्रबंध-बंधस्वामित्वं-वेदनाखंड-वर्गणाखण्ड-महाबंधानां षट्खण्डानां मध्ये जीवाप्रमेयांशं निरवशेषं समुद्धृत्य गोम्मटसार-पंचसंग्रहप्रपंचमारचयंस्तदादौ निर्विघ्नतः शास्त्रपरिसमाप्तिनिमित्तं नास्तिकतापरिहारार्थं शिष्टाचारपरिपालनार्थमुपकारस्मरणार्थं चेष्टविशिष्टदेवताविशेषं नमस्करोति ।

वृ० अन्तः—यत्र रत्नैस्त्रिभिर्लब्धार्हन्त्यपूज्या नरामरैः ।
निर्वान्तिमूलसंघोय नन्द्यादाचन्द्रतारकम् ॥ ४ ॥

तत्र श्रीशारदागच्छो बलात्कारगणोन्वयः ।
कुन्दकुन्दमुनीन्द्रस्य नंद्याम्नायोपि नंदतु ॥ ५ ॥

यो गुणैर्गणभृद्गीतो भट्टारकशिरोमणिः ।
भक्त्या नवीमि तं भूयो गुरुं श्रीज्ञानभूषणम् ॥ ६ ॥

कर्णाटप्रायदेशेशजैनभूपादिभक्तितः ।
सिद्धान्तं पाठितो येन मुनिचन्द्रं नमामि तम् ॥ ७ ॥

योभ्यर्थ्य धर्मवृद्ध्यर्थं मह्य सूरिपदं ददौ ।
भट्टारकशिरोरत्नं प्रमेन्दुः स नमस्यते ॥ ८ ॥

सूरेः श्रीधर्मचन्द्रस्याभयचन्द्रगणेशिनः ।
वर्णिलालादिभव्यानां कृते कर्णाटवृत्तितः ॥ ९ ॥

रचिता चित्रकूटे श्रीपार्श्वनाथालयेमुना ।
साधुसांगा-सहसाभ्यां प्रार्थितेन मुमुक्षुणा ॥ १० ॥

गोम्मटसारवृत्तिर्हि नन्द्याद् भव्यैः प्रवर्त्तिनी ।
शोधयन्त्वागमात् किंचिद्विरुद्धं चेद् बहुश्रुताः ॥ ११ ॥

निर्ग्रन्थाचार्यवर्येण त्रैविद्यचक्रवर्त्तिना ।
संशोध्याभयचंद्रेणालेखि प्रथमपुस्तकम् ॥ १२ ॥

इत्याचार्यश्रीनेमिचन्द्रकृतायां गोम्मटसारापरनामपंचसंग्रहवृत्तौ कर्मस्थितिरचनास्वभावो नाम नवमोधिकारः समाप्तः ॥

वर्द्धतां जिनशासनम् ॥

[3638] वृ० अन्तः— जिनशासनसुरशिखरिणि चान्द्रकुलं नन्दनायते तत्र ।
खरतरगणेन सुगणेन कल्पतरुयितमभिमतार्थे ॥६॥

तस्मिन् प्रद्योतन इव सूरिरुद्द्योतनो गुणनिधानम् ।
पट्टक्रमेण जिनभद्रसूरिरष्टादशोऽथासीत् ॥७॥

तच्छिष्योऽजनि वाचकेषु विदुरो भानुप्रभः सुप्रभ-
स्तस्यारोऽन्तिषदो बभूवुरमलप्रज्ञाश्रयं तस्य तु ।
आद्यो वाचकसोमधीरपद्धधीः यो मन्त्रविद्याग्रणी-
रन्योऽभून्महिमाप्रलाभसहितः पुण्यश्रिया संहितः ॥८॥

सुगुणगणिषु तृतीयस्सरलमतिः कुशलसिंहनामा यः ।
विख्यातचन्द्रवर्द्धनगणिरप्यासीत् क्रमेण ततः ॥९॥

तेषां शिष्यत्रितयं समजनि जगतीतले विदितविनयम् ।
श्रीमेघनन्दन–दयानन्दन–जयविजयनाम्नात्र ॥१०॥

श्रेष्ठश्रेष्ठिकुलोत्तंसाः वाचकाः मेघनन्दनाः ।
वृत्तिं जीवविचारस्याकार्षीद् रत्नस्तदन्तिषत् ॥११॥

वृत्तिं जीवविचारस्य कुर्वता यन्मयार्जितम् ।
पुण्यं तेनैष भव्यौघः शिवसौख्यमथाश्नुताम् ॥१२॥

नृपविक्रमवत्सरतः प्राण-कायेन्दुशारदि(१६१०)नमसि सोमे ।
कृष्णाष्टम्यश्विन्यां वृत्तिर्देल्लूस्थितेन कृता ॥१३॥

राज्ये सलेमसाहेः सूरान्वयकमलबोधनखरांशोः ।
गणनायके विजयवति श्रीजिनमाणिक्यसूरिवरे ॥१४॥

प्राकृतवृत्तेः संस्कृतवृत्तिमकार्षं यथागमं शिष्यैः ।
अभ्यर्थितोऽलमिति पाठकरत्नाकरः सुगमम् ॥१५॥

इति जीवविचारवृत्तिः संपूर्णा ॥

[3641] आदिः— ध्यात्वा जैनं महः श्रीमत् सद्गुरुं प्रणिपत्य च ।
वृत्तिं जीवविचारस्य कुर्वे संक्षेपतः स्फुटाम् ॥१॥

संवद्व्योम–शिलीमुखाष्ट–वसुधासंख्ये (१८५०) नभस्ये सिते
पक्षे पावनसप्तमीसुदिवसे बीकादिनेराभिधे ।
शृंगे श्रीमति पूर्णतामभजद् व्याख्या सुबोधिन्यसौ
सम्यक् श्रीजिनचन्द्रसूरिमुनिपे गच्छेशतां बिभ्रति ॥३॥

श्रीमन्तो जिनभक्तिसूरिगुरवश्चान्द्रे कुले जज्ञिरे
तच्छिष्या जिनलाभसूरिमुनिपाः श्रीप्रीतितः सागराः ।
तच्छिष्याऽमृतधर्मवाचकवरास्तेषां विनेयः क्षमा-
कल्याणः स्वपरोपकारविषयेकार्षीदिमां वृत्तिकाम् ॥४॥

इति श्रीजीवविचारप्रकरणवृत्तिः सद्भिर्वाच्यमाना चिरं नन्दतात् ॥

सं० १८९३ मिती पोह सुदि ५ ॥ सांवसुखा सुजाणमल्लजीपठनार्थम् ॥

[ 3650 ] अन्तः— इति श्रीजीवविचारप्रकरणं समाप्तम् ॥

संवत् १७१७ वर्षे भाद्रवावदि ११ गुरुवासरे लिखितोयम् ॥ तपागच्छे भट्टार[क]श्रीविजयराजसूरीश्वरराज्ये पण्डितोत्तमपण्डित–श्री५श्रीतेजविजयगणि–तत्शिष्यपण्डितश्री३श्रीधीमविजयगणिशिष्य...विजयलिखितं परोपगा[क]राय । श्राविका चांपापठनार्थमिति श्रेयः ॥छ॥

[ 3652 ] अन्तः—(पुरातन'चोपडा' इत्याख्यप्रतौ पश्चात्काले लिखितमिदम्–)

अमेचन्दे दोकड १ पोताना आपीने लीधुं छे, भरुअचमघे श्रीपरभु मुनीसुवरतः ॐ नमो नमः वीसमो तीर्थंकर जगतजअंतदरनो(?) ।

[ 3675 ] मू०अन्तः— सिरिजिणहंसमुणीसररज्जे सिरिधवलचन्दसीसेण ।
गजसारेण लिहिया एसा विन्नत्ति अप्पहिया ॥३९॥

चू०अन्तः —श्रीजिनहंससूरिनामानो ये श्रीजिनसमुद्रसूरिपट्टप्रतिष्ठिता मुनीश्वराः खरतरगच्छाधिपतयस्तेषां राज्यं गच्छाधिपत्यलक्षणं तस्मिन् विजयान सैद्धांतिकशिरोमणीनां श्रीधवलचन्द्रगणिनां शिष्येण सांवप्रपण्डिताऽभ्रयोदयगणिलालितपालितेन गजसारगणिनाम्ना साधुना एषा विचारषट्त्रिंशिकारूपा श्रीतीर्थंकर्ता विज्ञप्तिलिखितेतिपदेनौद्धत्यं परिहृत्य यद्वा पूर्वं यन्त्रपत्रतया लिखिता ततः सुगमतायै सूत्रतया गुफिता इत्यर्थः । किंभूता ? आत्महिता अनेन ।

भवति हि धर्मः श्रोतुः सर्वस्यैकान्ततो हितश्रवणात् ।
ब्रुवतोऽनुग्रहबुद्धया वक्तुस्त्वेकांतनो भवति ॥९॥

इति सूक्तं स्थापितम् ॥

निधि–मुनि–शरेन्दु(१५७९)संवल्लिपीकृता पत्तने च चूर्णिरियम् ।
संशोध्या धीमद्भिर्मत्वेदं बालचापल्यम् ॥१॥

इति श्रीविचारषट्त्रिंशकाचूर्णिः संपूर्णा ॥

सं० १८९७ मिती माघवदि १० रविवासरे श्रीविक्रमपुरमध्ये लिखितं पं०बुलीचन्द सांवसुखा सुजाणमल्लजीस्वपठनहेतवे ।

[ 3684 ] स्त०अन्तः— विश्रुतीयशःस्तोमयशस्सोमगुरोः शिशुः ।
भाषायां लिखिता ह्येषा टबार्थदण्डकस्तुतिः ॥

संवत् १८५६ वर्षे ज्येष्टसुद ७ दिने पं०श्री५पं०हेमविजयग० तत्शीषमुनिलालविजय लपीकृत्यं जामपुरे सीतलनाथप्रसादे ।

[ 3688 ] अन्तः— इति श्रीचउवीसदंडकसूत्रं संपूर्णम् ॥

संव[त्] १७२० वर्षे माघमासे कृ[ष्ण]पक्षे १० गुरौ श्रीअंचलगच्छे वाचकोत्तमवा० श्री५श्रीज्ञानशेखरगणि–तत्शिष्यमुनिश्रीखीमाजिलिखितं शुभं भूयात् । श्रीरताडीआग्रामे श्रीगोडीपार्श्वनाथप्रसादतः ।

(अन्यदीयहस्तेन लिखितम्)–

लि० ऋ०मालजीइ थाकी ए परत लखवा राखी ती तो वणीने पाछी आपी छे । हवे कांइ मागता नथी परत ।

[ 3692 ] स्त०अन्तः—श्रीजिनहंससूरि मुनिसर तेहनइं राज्यइं श्रीश्रीधवलचन्द्रमहोपाध्यायमा शिष्य गजसागरगणिए चउवीस तीर्थकरनी वीनती आत्महेतु लिखी इति श्रीविचारछत्रीसी नामइं श्रीतीर्थंकरनी वीनती संपूर्णः ॥

संवत् १८७३ अषाढ सुदि १० वारगुरुश्रीसुरतबिंदरमध्ये श्रीसुपासजीना प्रसाद थकी लीपी करी छे । श्लोकसंख्या १७५ ॥

पण्डितश्रीपं० भाग्यहंसगणिसेव[क]रूपलिपीकृतम् श्रीदांदेरबींदरमद्धे नीसाफलीयामद्धे तपागच्छे अप्पासरो छें । श्रीमनमोहनपार्श्वनाथप्रसादात् हुरीपरा परामद्धे ॥

[ 3695 ] अन्तः— संवत् १८५७ वर्षे आसु वद ५ दने वार भौमे लखितं । मुनि भाणचन्द मु०गुणचन्दजीपठनार्थं श्रीराजनगरे ॥ हाजापटेलनी पोलमध्ये श्रीशांतिनाथप्रसादात् श्रीचन्द्रप्रभुप्रसादात् श्रीअञ्चलगच्छे चोमासो कृतं यतेः ।

[ 3701 ] स्तःअन्तः—संवत् १९८८ वर्षे ज्येष्ठसुदी २ दिने लषीतं राजनगरमध्ये । बाईसषरबाईपठनार्थम् ।

सकलपंडितशिरोरत्नपंडितश्रीश्री १९ श्रीश्रीजिनचन्द्रगणिपंडितश्री५श्रीतेजचन्द्रगणि-शिष्यपंडितश्री५श्रीजीवणचन्द्रगणि-सतीर्थपंडितश्रीश्रीश्रीज्ञानचंद्रगणिशिष्यपं०दोलतचन्दलखीतं(लिखितम्) ।

[ 3740 ] अन्तः— इति श्रीसिद्धपंचाशिकाटबार्थः कृतो लिखितश्च पंडितश्रीलालकुशलगणिभिः ।

सिद्धः पंचाशिकार्थोयं स्तंभतीर्थपुरे वरे ।
लालयकुशलेनाद्यः क्लृप्तः संघे श्रियं दिशेत् ॥

इति टबो ग्रन्थ २४१ छइ ॥

संवत् १९४४ वर्षे मार्गशीर शुदि पूर्णमासीतिथौ वारगुरुदिने लखितम् ।

[ 3743 ] अन्तः— संवत १९२१ ना वर्षे चैत्रसुद ४ दने लष्यं लषावितम् गर[णी]जी जीवसरीजी तथा नवलसरीजी तथा अजाबसरीजी लषीतं पेमचन्द लख्युं छें, राजनगरमध्ये लख्युं, घोकाँटे लखु छे । अबोबा(बा)ना डेला० ।